# कुसुमाञ्जलिव्याख्याविवृतिः ।

राजकीयसंस्कृतविद्यालयान्यतमाध्यापक-

**श्रीकामाख्यानाथ-तर्कवागीशेन विरचिता,**

श्रीमदुदयनाचार्य्यप्रणीतकारिकया श्रीहरिदासभट्टाचार्य्य-

कृतव्याख्यया च सहिता ।

विवृतिकारेणैव संशोधिता प्रकाशिता च ।



कलिकाताराजधान्याम्

३८ संख्यकसिद्धेश्वरयन्त्रे

श्रीसिद्धेश्वरपालेन मुद्रिता ।

शकाब्दाः १८१७ ।

मूल्य २) टाका मात्र ।

# বিজ্ঞাপন।

উদয়নাচার্য্য প্রণীত কুসুমাঞ্জলির কারিকাংশের যে ব্যাখ্যা হরিদাস-ভট্টাচার্য্য করিয়াছেন ঐ ব্যাখ্যা অত্যন্ত সংক্ষিপ্ত ও স্থানে স্থানে দুর্ব্বোধ ঐ ব্যাখ্যাদ্বারা কারিকারও অনেকাংশের তাৎপর্য্য সুন্দররূপে ব্যক্ত হয় নাই অতএব আমি ঐ হরিদাসব্যাখ্যার বিবরণে প্রবৃত্ত হইয়াছি কতদূর কৃতকার্য্য হইয়াছি বলিতে পারিনাই, কৃতকার্য্য হইবার সম্ভবনাই বা কি, অল্পবুদ্ধি হইয়া আমার এই দুরূহব্যাপারে যে হস্তক্ষেপ সে কেবল উপহাসের নিমিত্ত, যাহা হউক আমার এই বিবৃতি দ্বারা যদি বিদ্যার্থিগণের কিঞ্চিন্মাত্রও উপকার হয় তাহা হইলেও আমি শ্রম সফল মনে করিব। ভরসা করি বুধগণ আমার এই বিবৃতির দোষাংশ পরিত্যাগ করিয়া যদি কিঞ্চিন্মাত্রও গুণ থাকে তাহাই গ্রহণ করিবেন এই সাহসে এইদুরূহ কার্য্যে প্রবৃত্ত হইয়াছি। আমি এই বিবৃতি প্রণয়নে তিনখানি টীকা হইতে সাহায্য পাইয়াছি একখানি বর্দ্ধমানোপাধ্যায়কৃত কুসুমাঞ্জলি টীকা, একখানি রামভদ্রকৃত টীকা, আর একখানি আদ্যন্তখণ্ডিত রাধামোহনগোস্বামিকৃত টীকা। কোন কোন স্থানে ঐ অন্যতমটীকার অংশ অপরিবর্ত্তিতরূপেই আমার বিবৃতিতে উদ্ধৃত করিয়াছি। এই বিবৃতিতে আমি অনেক কারিকার যথা শ্রুতার্থ সন্নিবেশিত করিয়া হরিদাসব্যাখ্যার বিবরণ করিয়াছি। আমার এই বিবৃতি পূজ্যপাদ শ্রীযুক্ত মধুসূদনস্মৃতিরত্নমহোদয় আদ্যন্ত দেখিয়া আমার যে সকল ভ্রম ছিল তাহার সংশোধন করিয়া দিয়াছেন, স্মৃতিরত্ন মহাশয় আমার গুরু আমাকে অপত্য নির্ব্বিশেষে স্নেহ করিয়া থাকেন তিনি স্নেহপরতন্ত্র হইয়াই এই পরিশ্রম স্বীকার করিয়াছেন ইতি।

কলিকাতা সংস্কৃত বিদ্যালয়ান্যতমাধ্যাপক-

শ্রীকামাখ্যানাথ শর্ম্মা।

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठम् । | पङ्क्तिः । |
|---|---|---|---|
| दुःखहानिमित्युक्तौ | दुःखविहीनमित्युक्तौ | २ | २४ |
| निरूपनीयं | निरूपणीयं | ३।८ | १४।१८ |
| सखलादि | सुखलादि | १० | १९ |
| थादि | त्वादि | ११ | ४ |
| चार्वाकाना | चार्वाकाणां | ११ | ८ |
| विषयक | विषयत्व | ११ | २६ |
| त्वपायत्व | त्वपायैक | १६ | २६ |
| यथा क्र्रादिः | यथा वक्रादिः | २२ | २१ |
| भावः। | भावः | २५ | १४ |
| भूमि | भूमि | २७ | ११ |
| यथार्थ | यथार्थं | २७ | २६ |
| प्रवियोगि | प्रतियोगि | २८ | २२ |
| सवदेव | सर्वदेव | २९ | १९ |
| तुपत्ति | नुपपत्ति | ३१ | २५ |
| पंसः | पुंसः | ३२ | २५ |
| सम्भावा | सम्भवा | ४४ | ११ |
| समर्था | समर्था | ४५ | १ |
| दनुपपत्ति | दनुपपत्ति | ५० | १० |
| सकलं | सफलं | ५५ | १४ |
| दार्थ | पदार्थ | ६१ | २१ |
| उपानन्तु | उपमानन्तु | ६४ | १० |
| धीघच्छा | धीमेच्छा | ६७ | ११ |
| अपौरुषेत्व | अपौरुषेयत्व | ६९ | १५ |

| अशुद्धम् । | शुद्धम् । | पृष्ठम् । | पङ्क्तिः । |
|---|---|---|---|
| मत्त्वस्यपि | मत्त्वस्यापि | ६९ | १९ |
| वेव | वेद | ७१ | २५ |
| ययर्थं | यथार्थं | ७४ | २६ |
| वेदस्यानर्थक्यापत्तिः । | वेदस्यानर्थक्यापत्तिः ॥ १८ ॥ | ७७ | २ |
| न वार्थापत्तिर्मानान्तरं ॥ १८ ॥ तद्देवाह, | न वार्थापत्तिर्मानान्तरं, तदेवाह, | ७७ | ३ |
| अनुमितिसामग्र्यजन्यत्वे० | अनुमितिसामग्रीभिन्नसामग्र्यजन्यत्वे | ७८ | ९ |
| सविषय | स्वविषय | ७९ | १० |
| सत्वेऽपि | सत्त्वेऽपि | ८८ | ६ |
| स्वेन्पत्ति | स्वोत्पत्ति | ८९ | ८ |
| त्रित्वादि | द्वित्वादि | १०१ | २७ |
| स्यत्यर्थः | स्वेत्यर्थः | १०७ | १६ |
| प्रद्वते | प्रढते | १०८ | २० |
| दिगि | दिति | १११ | १६ |
| रूपवत्त्वया | रूपवत्तया | ११८ | २४ |

श्रीगणेशाय नमः।

# कुसुमाञ्जली।

## प्रथमस्तवकः।

ईषदीषदनधीतविद्यया तात-मातृमुदमाविवर्द्धयन्।
क्षेपणाय भव-कर्म-जन्मनां कोऽपि गोपतनयो नमस्यते॥

---

हेरम्बचरणद्वन्द्वं विघ्नविध्वंसकारणम्।
यत्पूजितं महेन्द्राद्यैस्तन्नत्वा भक्तिभावतः॥१॥
कुसुमाञ्जलिटीका या हरिदासेन निर्मिता।
कामाख्यानाथशर्मा तां विवृणोति यथामति॥२॥
श्रमो मदीयः साफल्यं तदैव समवाप्स्यति।
सदोषामपि सद्व्याख्यां गृह्णीयुर्विबुधा यदि॥३॥

प्रारिप्सितग्रन्थसमाप्तिप्रतिबन्धकविघ्नसमूहविध्वंसनपटीयांसम् ईश्वरनमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति, 'ईषदीषदि'ति, 'ईषत्' अल्पम्, 'ईषत्' अल्पा अल्पतरा इति यावत्, 'अनधीता' अनुपदिष्टा स्वतः प्रवृत्तेति यावत्, ईदृशी या 'विद्या' वाक्, तया, यद्यपि विद्याशब्दस्य ज्ञानपरत्वं, तथापि आयुर्घृतमित्यादाविव जनकलक्षणया वाक्परत्वमिति। 'तात-मातृमुदमाविवर्द्धयन्' तातस्य मातुश्च आनन्दं जनयन्, 'कोऽपि' अनिर्वचनीयः, 'गोपतनयः' गोपनन्दनः श्रीकृष्णः, 'नमस्यते' स्वावधिकोत्कर्षवत्तया ज्ञाप्यते, स्वावधिकोत्कर्षवत्तया ज्ञापनस्य नमस्कारपदार्थत्वात्। नमस्कारप्रयोजनमाह, भवेति, 'भवः' संसारः मिथ्याज्ञानजन्यवासनेति यावत्, 'कर्माणि' अदृष्टरूपाणि शुभाशुभकर्माणि, 'जन्म' आत्मनो देहेन्द्रियसम्बन्धः, तेषां 'क्षेपणाय' विनाशाय। केचित्तु 'भवजन्मकर्मणाम्' इति पाठं कल्पयन्तः भवे लोके जन्म येभ्यः तादृशानि यानि शुभाशुभकर्माणि तेषां 'क्षेपणाय' विनाशाय इति व्याचक्षते।

इष्टदेवतासंकीर्त्तनं ब्रह्मप्रतिपादकसच्छब्दप्रयोगात्मकं मङ्गलञ्च कुर्वन्नेव ग्रन्थनामाह,—

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो-
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमानं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥१॥

एष अनघः निर्दोषः न्यायः समस्तरूपोपपन्नलिङ्गप्रतिपादकं वाक्यं स एव कुसुमाञ्जलिः, मे मम चित्तं रमयतु दुःखसामग्री-

---

इष्टदेवतेति, 'इष्टदेवतायाः' अभिमतदेवतायाः, 'सङ्कीर्त्तनम्' ईश्वरेति नामोच्चारणं, सच्छब्देति, "ॐ तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इत्यादिना सच्छब्दस्य ब्रह्मप्रतिपादकत्वं प्रतिपादितम्। ग्रन्थनामाहेति 'ग्रन्थनां' सन्दर्भम्, अथवा 'ग्रन्थस्य नाम' प्रसूनाञ्जलिरित्यनेन प्रसूनाञ्जलिशब्दाभ्याम् आर्थत्वं: ।

न्याय इति नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति न्यायः। समस्तरूपोपपन्नेत्यादि, समस्तरूपोपपन्नलिङ्गप्रतिपादकं वाक्यम् उचितानुपूर्वीकप्रतिज्ञादिपञ्चावयवसमुदायात्मकं वाक्यं, न तु समस्तरूपाणि पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वरूपाणि यानि पञ्चरूपाणि तैः उपपन्नं विशिष्टं यत् लिङ्गं वह्न्यादौ हेतुः तत्प्रतिपादकं वाक्यम्, ईदृशवाक्यत्वरूपन्यायलक्षणस्य "तत्र न समस्तरूपोपपन्नलिङ्गप्रतिपादकं वाक्यं, न्यायः अतीव वाक्ये अतिव्याप्तेः", इत्यनेन अभिज्ञता, "अतिव्याप्तेरनुपलक्षणं केवलान्वयिव्यतिरेकि विपक्षाप्रसिद्धा तत्साध्यकन्याये अव्याप्तिरपि द्रष्टव्या" इत्यनेन अवयवमुखव्याख्यानाव-सरे जगदीशतर्कालङ्कारेण च निरस्तत्वात्। स एव कुसुमाञ्जलिरिति, यद्यपि "स्त्री पुंस्यञ्जलिः पुमान्" इति कोषात् [illegible], तथापि "दन्ताग्रान् द्यान् अनात्रीन्" इत्यादिवत् राजदन्तादित्वात् परनिपातेन अञ्जलेः प्रसूनमिति तत्पुरुषसमासाङ्गीकारात् नानुपपत्तिः। दुःखसामग्रीविहीनमिति, दुःखानि-मित्तकी कदाचित् अप्रकादीनां तत्र एव दुःखसामान्याभावात् सामग्रीति, प्रागभाव-घटितसामग्री तु तत्त्वज्ञाननाश्या। यद्यपि दुःखसामग्रीविहीनत्वं मनसि सिद्ध्यतीति न

विहीनं करोतु। अनवद्यत्वं शब्ददोषरहितत्वं, विषयाशुद्धेः पूर्वार्द्धेनैव निरासादिति प्रकाशः। अविघ्नं यथा स्यात् ईशस्य पदयुगे पद्यतेऽनेनेति व्युत्पत्त्या पद्यं प्रत्यायकं, तद्युगं प्रमाण-तर्करूपं, तत्र निवेशितः तद्विषयतया उत्पादितः। चेतः कीदृशं भृङ्गायमानं भृङ्ग इव मकरन्दे दुःखविगमोपाये सतृष्णं भ्रमत् दुःखविरमोपायमनुसन्दधत्। प्रसूनाञ्जलिसाम्यमाह, सदित्यादि। सता समीचीनेन पक्षेणानुकूलेन रविकिरणादिना प्रसरो विकाशो यस्य स तथा, सतां पत्राणां दलानां विकाशो यत्र स तथेति वा। सतामनुपहतघ्राणानां परिमलस्य गन्धविशेषस्य प्रोद्बोधेन साक्षात्कारेण यद्वा उत्सव आनन्दो येन सः। विमर्दने करपुटविमर्दने न विम्लानः

---

तत्र इच्छोत्पत्तिसम्भवस्तथापि स्वाश्रयात्मसंयोगरूपपरम्परासम्बन्धेन दुःखसामग्रीध्वंसवत्त्वं मनसो बोध्यम्, एतच्च न्यायमते, वेदान्तमते तु यथाश्रुतमेव सम्यक् तन्मते दुःखादीनां मनसो धर्मत्वात्। शब्ददोषरहितत्वमिति शब्ददोषस्तु निराकाङ्क्षत्वादिकं, विषयाशुद्धेरिति विषयः क्षितिः सकर्तृका कार्यत्वादित्यादिन्यायप्रयोज्यबोधविषयः सकर्तृकत्वादि, तस्याशुद्धिः पक्षादावसत्त्वमित्यर्थः। प्रमाण-तर्करूपमिति, अत्र प्रमाणं क्षितिः सकर्तृका कार्यत्वादित्याकारकमनुमानं, तर्कस्तु क्षित्यादिकं यदि सकर्तृकं न स्यात् तदा कार्यं न स्यादित्याकारकः, अथवा कार्यत्वं यदि सकर्तृकत्वव्यभिचारि स्यात् तदा कृतिजन्यतावच्छेदकं न स्यात् अतिप्रसक्तधर्मस्यानवच्छेदकत्वात् इत्येवं तत्र तर्कः। अतएव सिद्धान्तमुक्तावल्यामुक्तं, "मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एवानुकूलस्तर्कः" इति। न चान्वय-व्यतिरेकाभ्यां घटत्वावच्छिन्नं प्रति कुलालादिकृतित्वेनैव हेतुत्वात् एतादृशकार्यकारणभावे मानाभाव इति वाच्यम्। घटत्व-पटत्वादिभेदेनानन्तकार्यकारणभावकल्पनापेक्षया कार्यत्वावच्छिन्नं प्रति कृतित्वेन हेतुत्वकल्पनस्यैवौचित्यात् वह्निधूमयोरिति न्यायेन कार्यत्व-कृतित्वाभ्यां सामान्यकार्यकारणभावावश्यकत्वाच्च। न चैतादृशान्वयी नियामक इति वाच्यम्। कार्यत्वावच्छिन्नाभावे ततत्कृत्यभावकूटस्य प्रयोजकत्वकल्पने गौरवात् कृतित्वावच्छिन्नाभावस्यैकस्य प्रयोजकत्वे लाघवादिति। तद्विषयतया उत्पादितः तन्निमित्ततया उत्पादितः इत्यर्थः। तदाच न्यायपद्यं पदयुग इत्यत्र निमित्तार्थे सप्तमी।

नान्यथाभूतसंस्थानः। अमृततुल्यं रसं प्रस्यन्दते इति प्रस्यन्दः, एतादृशं माध्वीकं मधु, तस्य भूरुत्पत्तिस्थानम्।

न्यायपक्षे सति प्रामाणिके पक्षतावच्छेदकविशिष्ट इति यावत्, पक्षे सिषाधयिषितसाध्यके धर्मिणि प्रसरः प्रकर्षेण सरो ज्ञानं यस्मात्। एतेनाश्रयासिद्धि-स्वरूपासिद्धि-बाधनिरासः। सतां विवेचकानां परि सर्वतोभावेन मलः सम्बन्धो व्याप्तिः, तस्याः प्रोद्बोधेन प्रमया वद्ध उत्सव आनन्दो येन, एतेन व्यभिचार-व्याप्यत्वासिद्धि-विरोधानां निरासः। विमर्दने विरोधिप्रमाण-

---

ननु व्याप्ति-पक्षधर्मताविषयकतया अनुमाने उदाहरणोपनयादिघटितन्यायस्य निमित्तत्वेऽपि तर्के कथं न्यायस्य निमित्तत्वमिति चेत्, न, तर्कस्यापि आपाद्यापादकव्याप्तिज्ञानमूलकतया तादृशव्याप्तिज्ञाने न्यायस्य निमित्तत्वात्। दुःखविगमोपायमनुसन्दधदिति दुःखहानोपायगोचरोत्कटेच्छावदित्यर्थः, आयतने मनसस्तस्य स्वजनकज्ञानजनकसंयोगरूपपरम्परासम्बन्धेन, स्वजनकज्ञानञ्च इष्टसाधनताज्ञानं उपायेच्छां प्रति फलसाधनताज्ञानस्य हेतुत्वात्, तज्जनकसंयोगः आत्म-मनःसंयोगः ज्ञानसामान्य एव तस्य हेतुत्वात्। प्रसूनाञ्जलिसाम्यमिति, अत्र (साम्यं स्वप्रतिपादकशब्दप्रतिपाद्यत्वेन ज्ञेयम्। सिषाधयिषितेति, वेदादिशब्देनैव 'ईश्वरविषयकशाब्दसिद्धिसत्त्वादेतदनुमानेन ईश्वरसाधने पक्षत्वं न स्यात् अतः सिषाधयिषितेति, तथाच शाब्दसिद्धिसत्त्वेऽपि सिषाधयिषाविरहविशिष्टसिद्ध्यभावसत्त्वान्न पक्षताहानिः। प्रकर्षेणेति, प्रकर्षश्च यथार्थत्वमिति। आश्रयासिद्धीत्यादि, ननु एतद्बलेन आश्रयासिद्धि-बाधनिरासेऽपि पक्षतावच्छेदकविशिष्टे हेतुज्ञानाविरोधितया कथं स्वरूपासिद्धिनिरास इति चेत्, न, लिङ्गोपहितलैङ्गिकभानस्याभ्युपगतसिद्धतया हेतुविशिष्टपक्षे साध्यस्यानुमित्या विषयीकरणेन स्वरूपासिद्धिनिरासात्। न च तादृशमताश्रयणेन स्वरूपासिद्धिनिरासे व्यभिचारादीनामपि निरासस्सम्भवात् दलान्तरं व्यर्थं माध्यमिककार्य-कारणभावापन्ननिबन्धनलाघवार्थमेवाचार्यैः लिङ्गोपहितलैङ्गिकभानाङ्गीकारात् अनुमितौ पक्षांशे हेताविव हेत्वंशे व्याप्तिभानस्यानङ्गीकर्तव्यत्वात् इति वाच्यम्। साध्याभाववदवृत्तित्वरूपैकविधव्याप्तिज्ञानस्यानुमितिकारणत्वादिनां वाचार्यविशेषाणां मते अनुमितौ पक्षांशे लिङ्गभानेनैव माध्यमिककार्य-कारणभावापन्ननिबन्धनलाघवमथवाम् व्याप्तिभानस्यानावश्यकत्वात्। केचित्तु सिषाधयिषितं

चिन्तायां न विश्वास: न कार्य्याक्षम:, तेन सत्प्रतिपक्षराहित्यम्। अमृतं मोक्ष:, रसं दृश्यमानं, क्वचिद्दृष्ट इति न्यायात्, प्रस्यन्द-उत्पद्यमानम्। तेन मोक्षस्यासाध्यता निराकृता। तदेव माध्वीकं, तस्य भूरुत्पत्तिस्थानम् ॥ १ ॥

नन्वीश्वरपदयुनिवेशितस्य न्यायस्य मोक्षरूपफलसम्बन्धे मानाभाव:, तत्त्वज्ञानविषयात्मबोधकस्यात्मशब्दस्य संसारनिदान-मिथ्याज्ञानविषयस्यात्ममात्रपरत्वात् तन्मननस्यैव मोक्षोपायत्वात् इति शङ्कायामाह,—

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिण: ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥

---

साध्यं धर्मोऽस्य इति व्युत्पत्त्या बाधव्युदास:। धर्मिणि हेतुभूतधर्मवति इति स्वरूपासिद्धि-व्युदास:। प्रकर्षेण व्याप्त्या अवच्छेदावच्छेदेनेति यावत् तेन भागासिद्धिव्युदास:। ज्ञानं हेतोरित्यर्थादित्याहु:। सर्वतोभावेनेति अन्वयतो व्यतिरेकतश्चेत्यर्थ:, अथवा परित: सपक्षे सत्तया विपक्षे चासत्तया यो भव: सम्बन्धो व्याप्तिरूप: इत्यर्थ:। व्यभिचारेति प्राचीनै: साध्याप्रसिद्धिसाधनाप्रसिद्ध्यो: व्याप्यत्वासिद्धावन्तर्भावात् न तयो: पृथगुपन्यास:। विरोधि-प्रमाणचिन्तायामिति, विरोधिप्रमाणं विपरीतकोटिविषयकप्रमितिजनको हेतु: तच्चिन्ता तद्विषयकं ज्ञानं, स्वकार्य्ये स्वप्रयोज्यानुमिति:, तदक्षम: तदप्रयोजक:, तथाच विरोधि-कोटिप्रमापकहेतुविषयकज्ञानाधीन-स्वप्रयोज्यानुमित्यप्रयोजकतावान् यो यो न्याय: तत्तद्भेदकूटवान् इति समुदितार्थ:। क्वचिद्दृष्ट इति "क्वचिद्दृष्टो भावो द्रव्यवत् प्रकाशते" इति न्यायादित्यर्थ: ॥ १ ॥

नन्वीश्वरेत्यादि, ईश्वरमननस्य मोक्षहेतुत्वे मानाभाव:, "आत्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य:" इत्यादिश्रुते: सामानाधिकरण्यानुरोधेन यद्विषयक-साक्षात्कारो मोक्षहेतु: तद्विषयकं मननं मोक्षजनकं, साक्षात्कारश्च नेश्वरविषयक:, मिथ्याज्ञानध्वंसद्वारा हि अस्य तद्धेतुत्वम्। न चेश्वरगोचरं मिथ्याज्ञानं संसारहेतु: येन ईश्वरगोचरमिथ्याज्ञानध्वंसद्वारा ईश्वरतत्त्वसाक्षात्कारो हेतुर्भवेत्। किन्तु आत्म

स्वर्गापवर्गयोः स्वर्गतुल्ययोरपवर्गयोः जीवनमुक्ति-परममुक्त्योः। ईश्वरमननजादृष्टद्वारा स्वात्मसाक्षात्कारद्वारा वा मुक्तौ हेतुः, "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतिस्तत्कारणत्वे मानम्। स्वात्मसाक्षात्कारस्य मोक्षहेतुत्वे मानञ्च "यदात्मानं विजानीयादहमस्मीति पूरुषः। किमिच्छन् कस्य कामाय संसारमनुसंसरेत्" ॥ इति ॥ २ ॥

---

गोचरं मिथ्याज्ञानमिति तत्तत्त्वसाक्षात्कार एव मोक्षहेतुरिति समुदिततात्पर्य्यम्। कारिकायां स्वर्गेति, मनीषिणः विद्वांसः यस्य उपास्तिं उपासनां स्वर्गापवर्गयोः स्वर्गतुल्ययोरपवर्गयोः जीवन्मुक्ति-परममुक्त्योः मार्गं उपायं आमनन्ति कथयन्ति असौ परमात्मा निरूप्यते न्यायेन मननविषयीक्रियते इति वाक्यार्थः। यद्यपीपिग्रन्थियन्थ्याशिविदिवन्दीत्यादिसूत्रेण क्रियाधककर्युच्प्रत्ययविधानात् उपासनेत्येव भवितुमर्हति, तथापि अनुपेपणे प्रत्यस्य धातोरियं प्रयोगः उपसर्गबलेन धातोरन्यार्थकत्वात्। केचित्तु क्वचिदपवादविषयेऽपि उत्सर्गस्य समावेश इति न्यायात् आसधातोरेव क्तिप्रत्ययमाहुः। नन्वीश्वरोपासनायाः फलं न स्वर्ग इत्यत आह, व्याख्यायां स्वर्गतुल्ययोरिति, स्वर्गतुल्यत्वकथनेन उत्कटेच्छाविषयत्वं अन्यत्वञ्च सम्पादितं, अन्यथा तदभिधाने अनाकाङ्क्षिताभिधानापत्तेः। जीवन्मुक्ति-परममुक्त्योरिति, जीवन्मुक्तिश्च मिथ्याज्ञानजन्यवासनाराहित्ये सति जीवित्वं, जीवित्वञ्च शरीर-प्राणसंयोगः। परममुक्तिः चरमदुःखध्वंसः आत्यन्तिकी दुःखनिवृत्तिरिति यावत्। ईश्वरमननेति, तथाच "तमेव विदित्वेति श्रुत्या "द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव चेति श्रुत्या च "आत्मा वा अरे इत्यादि श्रुतिघटकात्मपदं ज्ञानवत्त्वरूपेण जीवात्म-परमात्मोभयपरं, अतएव "श्रुतौ हि भगवान् बहुशः श्रुति-स्मृतीतिहास-पुराणादिभिरात्मा मन्तव्यो भवति श्रोतव्यो मन्तव्य इति श्रुतेः" इत्युत्तरग्रन्थोऽपि सङ्गच्छते। यद्यपीश्वरमननं मिथ्याज्ञानोच्छेदद्वारा मोक्षोपयोगि, तथापि स्वात्मसाक्षात्कार एव उपयुज्यते। अतएवोक्तं, "नहि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोति" इति, तन्निरूपणमपि प्रयोजनवदिति। यदात्मानमिति, यदा पुरुषः अहमस्मीति देहभिन्नोऽहमित्येवं आत्मानं विजानीयादित्यर्थः। किमिच्छन् कस्य कामायेति, कामायेत्यत्र चतुर्थ्यर्थः प्रयोजकत्वं, तथाच किञ्चिदुपायेच्छाप्रयोजककिञ्चित्फलविषयकेच्छाविशिष्टः सन्नित्यर्थः। संसारेति, संसारं भोगादिस्थानं, अनुसंसरेत् आश्रयेदित्यर्थः ॥ २ ॥

इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः शुद्ध-बुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेश-कर्म-विपाकाशयैरपरामृष्टो निर्माण-कायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः, लोक-वेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष-इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरण-इति दिगम्बराः, उपास्यत्वेन देशित इति मीमां-सकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, याव-दुक्तोपपन्न इति नैयायिकाः, किं बहुना यं कारवो-ऽपि विश्वकर्मेत्युपासते, तस्मिन्नेवं जाति-गोत्र-प्रवर-चरण-कुलधर्मादिवदासंसारं सुप्रसिद्धानुभवे भगवति भवे सन्देह एव कुतः किं निरूपणीयं, तथापि—

---

सांख्य-वेदान्तादिसकलदर्शनसिद्धान्तानुसारिण एव भिन्नभिन्नरूपेण भगवन्तमुपासते एतत्स्वरूपाविवादात् न्यायेन तद्व्यवस्थापनं नोपपद्यत इत्याशङ्कां निराचिकीर्षुराह, इह यद्यपीति इह निरूपणे विषयत्वं सप्तम्यर्थः, तस्य वेदान्तेऽपि इत्यग्रिमतत्पदार्थेन समा-न्वयः, औपनिषदादयः निरुक्तविषयीभूतं यं परमात्मानम् उपासते इति सर्वत्र योजना। यं कमपीत्यादि, यं कमपि मुख्यं गौणं वा पुरुषार्थं मुक्तिप्रयोजनम्, अर्थयमानाः इच्छन्तः, यम् उपासते इत्यन्वयः। औपनिषदाः वेदान्तिनः, कापिलाः सांख्याः। केन रूपेण उपासते इत्याह, शुद्धबुद्धस्वभाव इत्यादि। क्लेशेति, लोकविरुद्धैः विषभक्षणादिभिः, वेदविरुद्धैः ब्रह्महननादिभिः, उपलक्षितः, इत्यस्य तत्पदार्थे तृतीया, सोऽधर्मित्वक्षमोऽपि निर्लेपः दृष्टादृष्टदोषरहितः, स्वतन्त्रः अन्येच्छानधीनेच्छावान्, अथ वा परमाणुदृष्टादि-,

न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरागता॥

श्रुतो हि भगवान् बहुशः श्रुति-स्मृतीतिहास-पुराणादिषु इदानीं मन्तव्यो भवति, "श्रोतव्यो मन्तव्यः" इति श्रुतेः। "आगमेनानुमानेन ध्याना-भ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्"॥ इति स्मृतेश्च। तदिह सङ्क्षेपतः पञ्चतयी विप्रतिपत्तिः, अलौकिकस्य परलोकसाधनस्याभावात्, अन्यथापि परलोकसाधनानुष्ठान-

---

साहित्यं विनापि जगत्कर्त्ता। लोकव्यवहारेति, यथा लोके व्यवह्रियते चतुर्भुजाद्युपेत-देहवान् ईश्वरः न तदन्य इति तथा। अथवा लोकव्यवहारसिद्धः राजा, "लोकसिद्धो राजा परमेश्वर इत्युक्तेः। अतिप्रसिद्धिं सूचयितुमाह, कारव इति शिल्पिन इत्यर्थः, विश्वकर्मा विश्वं सर्वमुत्पत्तिमत् कर्म कार्यं यस्य स तथा।

जातिः ब्राह्मणत्वादि, गोत्रं काश्यपादि, प्रवराः यज्ञे व्रियमाणा ऋषयः, कुलधर्मादयः कुलाचारादयः, भवति उत्पद्यते जगदस्मादिति भवः जगत्कर्तृपरमेश्वरः, तथाच आत्मादिवत् आसंसारं संसारमभिव्याप्य, सुप्रसिद्धानुभवे सुप्रसिद्धः अनुभवः असाधारण-कार्यं यस्य एतादृशे। भगवति षडैश्वर्यशालिनि भवे जगत्कर्त्तरि, सन्देह एव कुतः सन्देहस्यैवासम्भवः, किं निरूपणीयं कुत्र न्यायः प्रवर्त्तनीयः, इति पूर्वपक्षतात्पर्यम्। मननाख्यभववदुपासनायाः श्रुत्यादिना मोक्षसाधनतावगतेः मननरूपतदुपासनार्थमेव न्यायः प्रवर्त्तनीय इति सिद्धान्तं मनसिकृत्य समाधत्ते, तथापीति, न्यायचर्चा न्याय-प्रयोज्या, मननव्यपदेशभाक् मननाख्या अनुमितिरूपेति यावत्। ननु न्यायप्रयोज्याया-मननाख्योपासनायाः कोऽयमवसर इत्याशङ्क्याह श्रवणेति श्रवणोत्तरं प्राप्तेत्यर्थः। ननु मननस्य श्रवणोत्तरत्वे श्रवणानिर्वाहे कथं मननावसर इत्यत आह, श्रुतोहीति. मननस्य श्रवणोत्तरकर्त्तव्यत्वे श्रुतिं प्रमाणयति, श्रोतव्य इति। अथ स्मृतिमपि प्रमाणयति, आगमेनेति आगमेन श्रुत्यादिना, अनुमानेन व्याप्ति-पक्षधर्मताविशिष्टबहुविधहेतुज्ञाने-

विपाकाः जात्यायुर्भोगाः। धर्माधर्मौ आशयाः। निर्माणार्थं कायो निर्माणकायः। सम्प्रदायो वेदः। प्रद्योतक इति प्रकाशकः, वेदस्य नित्यत्वात्। घटादौ कर्त्तव्ये घटग्राहकः शिक्षयिता। शिवोनिस्त्रैगुण्यः। पितामहः जनकस्यापि जनकः। इज्यते इति यज्ञः। सर्वज्ञः क्षणिकसर्वज्ञः। आवरणमविद्या-राग-द्वेष-मोहाः

---

सर्वत्रैव संशयस्य पक्षताङ्गत्वमित्यभिमानिनो दुर्जनस्य सन्तोषार्थमाह, तुष्यत्विति, न्यायेनेति तुष्यतु दुर्जन इति न्यायेनेत्यर्थः। तदिदमिति यस्मात् विप्रतिपत्तिजन्या संशय एव तस्मात् इह यत्नं इत्यर्थः। सङ्क्षेपत इति, अवान्तरबहुविधविप्रतिपत्तीनां विशिष्यानिरास एव सङ्क्षेपः। पञ्चतयी विप्रतिपत्तिरिति निरस्येति शेषः। विप्रतिपत्तिः यथाक्रमं चार्वाक-मीमांसक-सौगत-दिगम्बर-सांख्यानां, विप्रतिपत्तिः विरुद्धा प्रतिपत्तिः विपरीतबुद्धिरिति यावत्। तथा चैतद्विप्रतिपत्तिपञ्चकनिरासादेव औपनिषदादिविप्रतिपत्तयो निरस्ता-भविष्यन्तीति भावः। परलोकसाधनस्याभावादिति, यज्ञगर्भादित्वात् पञ्चमी, अलौकिकपरलोकसाधनाभावं विषयीकृत्येत्यर्थः, एवमग्रेऽपि। अत्राभावपदम् असुरादिपदवत् भावविरोधिपरं, भावपदञ्च सत्तापरं, तथा चालौकिकपरलोकसाधनस्य या सत्ता अस्तित्वं तद्विरोध्यवगाहिनी विप्रतिपत्तिरिति तात्पर्यम्। अलौकिके विप्रतिपत्तिरीत्थं तु लौकिकप्रत्यक्षाविषयगुणत्वसाक्षाद्व्याप्यजात्यधिकरणत्वम् आत्मगुणे वर्त्तते न वा इत्याकारिका, अत्र भावकोटिर्नैयायिकानाम् अभावकोटिश्चार्वाकाणाम्, ईदृशी जातिः चार्वाकमते गुरुत्वादिकं तदधिकरणत्वम् आत्मगुणे न वर्त्तते, न्यायमते तु धर्मत्वाधर्म-त्वादिकं तादृशी जातिः तदधिकरणत्वम् आत्मगुणे वर्त्तते। ज्ञानत्व-सुखत्वादिकमादाय सिद्धसाधनवारणाय लौकिकप्रत्यक्षाविषयेति, भावनात्वमादाय सिद्धसाधनवारणाय गुणत्वसाक्षाद्व्याप्येति, अदृष्टत्वं न जातिः अतः धर्मत्वाधर्मत्वादिकं गुणत्वसाक्षाद्व्याप्य-जातिः, गुणत्वसाक्षाद्व्याप्यत्वञ्च गुणत्वव्याप्यजात्यव्याप्यत्वे सति गुणत्वव्याप्यत्वम्। न चाधिकरणत्वं व्यर्थं तादृशजातिरात्मगुणे वर्त्तते न वेत्यस्यैव सम्यक्त्वादिति वाच्यम्। एकधर्मावच्छिन्नाधिकरणत्वस्यैक्यमते तादृशजातित्वावच्छिन्नाधिकरणत्वम् एकमेव तथा च तादृशाधिकरणत्वे सामानाधिकरण्येन अवच्छेदकावच्छेदेन चोभयथापि आत्मगुणवृत्तित्वा-भावसाधने न सिद्धसाधनं तादृशजातित्वसामानाधिकरण्येन आत्मगुणवृत्तित्वाभावसाधने तु गुरुत्वमादाय सिद्धसाधनं भवत्येवेति ज्ञापनार्थम् अधिकरणत्वपर्यन्तप्रवेशादिति।

भिनिवेशाः। उपास्यत्वेन देशितो मन्त्रादिः। यावदुक्तेषु यदुपपन्नं तेनोपपन्नः। चरणं शाखा। शाब्दसिद्धावप्यनुमित्सयाऽनुमितेर्न संशयासत्त्वं दोषाय। तुष्यत्विति न्यायेन संशयमाह, तदि-त्यादि ॥ ३ ॥

---

परलोके विप्रतिपत्तिस्तु शरीरवृत्तिजातिमत्त्वं दुःखानवच्छेदकत्वसमानाधिकरणवृत्ति न वा इति स्वर्गे, नरके तु दुःखपदस्थाने सुखपदप्रक्षेपात् संशयः, तादृशी च जातिः पाप्यादिशरीरवृत्तिचैत्रत्वादिकं, अत्र भावकोटिः नैयायिकानाम् अभावकोटिः चार्वाकानां, स्वर्गीयशरीरवृत्तितच्छरीरत्वजात्यन्तर्भावेण शरीरवृत्तिजातिमत्त्वे दुःखानवच्छेदकत्वसमानाधिकरणवृत्तित्वम्। परलोकमाते तु अयं सुख-दुःखोभयजनकमच्छरीरातिरिक्तशरीरवान् न वेति, चैतत्तथा प्रसिद्धः।

साधने तु कार्यप्रतियोगित्वं प्रतियोगित्व-प्रागभावान्य-प्रागभावाविषयकप्रतीत्यविषयवृत्ति न वा इति अत्र तादृशप्रतीत्यविषयवृत्तित्वम् उभयमते प्रागभावत्वं प्रसिद्धम्, अत्र भावकोटिः नैयायिकानाम् अभावकोटिश्चार्वाकाणां, नैयायिकैः कारणत्वमङ्गीक्रियते तच्च कार्यनियतपूर्ववर्तित्वघटितं नियतपूर्ववर्तित्वञ्च प्रागभावघटितम् अतः कारणत्वं प्रागभावाविषयकप्रतीत्यविषयः प्रतियोगित्व-प्रागभावान्यञ्च, तद्वृत्तित्वं कार्यप्रतियोगित्वे वर्तते इति नैयायिकमतं, चार्वाकैः कारणत्वानङ्गीकारात् तन्मते कार्यप्रतियोगित्वं न कारणत्ववृत्ति, कार्यप्रतियोगित्वञ्च साक्षात् परम्परासाधारणं कार्यनिरूपकत्वं, प्रतियोगित्व-प्रागभावान्यत्वत्र प्रतियोगित्वे कार्यत्वं तच्च प्रागभावप्रतियोगित्वरूपम् अतः प्रागभावाविषयकप्रतीत्यविषयं तदादाय प्रागभावमादाय च सिद्धसाधनवारणाय प्रतियोगित्व-प्रागभावान्यत्वं प्रागभावाविषयकप्रतीत्यविषयविशेषणम्। न च प्रतियोगित्व-प्रागभावान्यप्रागभावाविषयकप्रतीत्यविषयं घटप्रागभावविशिष्टघटसंयोगमादाय सिद्धसाधनं तादृशघटसंयोगे घटरूपकार्यप्रतियोगित्वस्य वर्तमानत्वादिति वाच्यम्। प्रागभावाविषयकप्रतीत्यविषयवृत्तिपदेन प्रागभावाविषयकप्रतीतिविषयतानवच्छेदकरूपावच्छिन्ननिरूपकताकवृत्तित्वस्य विवक्षितत्वात् घटरूपकार्यप्रतियोगित्वे यत् घटसंयोगवृत्तित्वं तद्वृत्तितावच्छेदकं शुद्धघटसंयोगत्वमेव न तु घटप्रागभावविशिष्टं तस्य व्यावर्तकत्वेनानवच्छेदकत्वात् शुद्धघटसंयोगत्वञ्च न प्रागभावाविषयकप्रतीतिविषयतानवच्छेदकमिति न कुत्रापि सिद्धसाधनमिति सर्वं सुसमञ्जसम्। विशिष्टे तु अलौकिके,

धर्माधर्मात्मकालौकिकपरलोकसाधने विप्रतिपन्नं प्रति तत्-साधनं, सिद्धे च तस्मिन् तदधिष्ठातृतया ईश्वरसिद्धिः, अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्य्यजनकत्वात्। तत्साधनायाह,—

सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः॥ ४॥

अलौकिकोऽतीन्द्रियः परलोकहेतुरस्तीति प्रतिज्ञा। तत्र प्रथमतः कारणसामान्यसाधनायाह सापेक्षत्वादिति। सापेक्षत्वं कादाचित्कत्वं, तथाच कार्य्यं सहेतुकं कादाचित्कत्वात् भोजन-जन्यतृप्तिवत्। ननु घटादिहेतोः सदातनत्वे घटादेरपि सदातनत्वा-पत्तिः, तथाच तस्य कादाचित्कत्वं वाच्यम्, एवं तत्कारणपरम्परापि कादाचित्की सहेतुका वाच्या इत्यनवस्थायामुक्तमनादित्वादिति,

---

परलोकसाधनत्वं वर्त्तते न वा, परलोकसाधने अलौकिकत्वं वर्त्तते न वेति वा विप्रति-पत्तिः। तथाच कार्य्यकारणभावाभावे न क्षित्यादिकर्तृतया ईश्वरसिद्धिः, परलोकाभावे च तत्साधनयागादिप्रवृत्त्यभावे तदुपदेशकतयापि नेश्वरसिद्धिः, अदृष्टासिद्धौ तदधिष्ठा-तृतयापि नेश्वरसिद्धिरिति चार्वाकाभिप्रायः। द्वितीयादिविप्रतिपत्तिरीतिस्तु द्विती-यादिस्तबकव्याख्यानावसरे दर्शयिष्यते इति॥ ३॥

तदधिष्ठातृतयेति अचेतनादृष्टजन्यकार्य्ये चेतनस्य तत्सहकारिकारणत्वेनेत्यर्थः, तथा-चात्र प्रयोगः अदृष्टं चेतनाधिष्ठितम् अचेतनत्वे सति कारणत्वात् छिन्नपुरुषाधिष्ठित-कुठारवत्। अत्र चेतनाधिष्ठितत्वं चेतनरूपसहकारिकारणसम्पन्नत्वं, सापेक्षत्वं सदा-पेक्षया वर्त्तमानत्वं, कादाचित्कत्वमिति फलितार्थः, सहेतुकमिति सहेतुकत्वं यत्किञ्चिद्-वस्तुविशिष्टत्वं वैशिष्ट्यं स्वसमानियतसमसाकल-अव्यवहितक्षणप्रयुक्तव्यतिरेकप्रतियोगित्वोभय-सम्बन्धेन। न च किञ्चित्कालासम्बन्धित्वे सति किञ्चित्कालसम्बन्धित्वरूपं कादाचित्कत्वं प्रागभावे व्यभिचारीति वाच्यम्। उत्पत्तिमत्त्वे सतीति विशेषणात्। न च चार्वाकमते साध्याप्रसिद्धिरिति वाच्यम्। क्रियादानि प्रत्यक्षेणैव तत्सिद्धौ तदतिरिक्तानुमानात्, अतएव भोजनजन्यतृप्तेर्दृष्टान्तत्वेनोपादानं सङ्गच्छते। अनादित्वादिति कार्य्ये कारणप्रवाहस्येति

बीजाङ्कुरवत् प्रामाणिकोऽयमनवस्था न दोषायेत्यर्थः। ननु प्रकृतिरेव कारणमस्तु, किं तैः नानाबुद्ध्यात्मिका प्रकृतिरेव तथाऽस्तु इत्यत आह, वैचित्र्यादिति, कार्यं विचित्रकारणवत् विचित्रकार्यत्वात्। ननु दृष्टं यागाद्येव कारणमस्तु किमदृष्टेन इत्यत आह, विश्ववृत्तित इति, विश्वेषां परलोकार्थिनां वृत्तितः यागादौ प्रवृत्तितः, स्वर्गादिफलकारणत्वज्ञानमेव यागादिप्रवृत्तिजनकं, यागादेश्च तज्जनकत्वं तत्कालावस्थायिव्यापारं विना न सम्भवतीति अदृष्टसिद्धिः। नन्वदृष्टं न भोगसमानाधिकरणं किन्तु भोग्यादिनिष्ठत्वेनैव भोगजनकम् इत्यत आह, प्रत्यात्मनियमादिति, भुक्तेर्भोगस्य प्रतिनियतात्मवृत्तित्वात्, व्यधिकरणादृष्टस्य भोगजनकत्वेऽतिप्रसङ्गात् ॥ ४ ॥

---

शेषः। अनादित्वञ्च स्वसजातीयध्वंसव्याप्यप्रागभावप्रतियोगित्वम्। ननु कारणमात्रभिन्नावपि कार्यस्य एकम् एकजातीयं वा कारणमस्तु इत्याशङ्कते, नन्वित्यादिना, न च एकस्य ब्रह्मणः नानाबुद्ध्यात्मिकायाः प्रकृतेर्वा कारणत्वे कारणसदातनत्वेन घटादिकार्यस्य सदातनत्वापत्तिरिति वाच्यम्। वेदान्तमतं साङ्ख्यमतञ्चावलम्ब्य तादृशकारणस्य चार्वाकैराशङ्कितत्वात् वेदान्तमते कार्यस्य मिथ्यात्वेन सदातनत्वापत्तेरसम्भवात् साङ्ख्यमते च कार्य-कारणयोरभेदात् कारणसदातनत्वे कार्यसदातनत्वस्यापीष्टत्वात्। अतएव प्रत्यक्षमात्रप्रामाण्यवादिचार्वाकमते ब्रह्मणः प्रकृतेर्वाऽलीकत्वेन कथं तयोः कारणत्वमुक्ता शङ्क्यते इति पूर्वपक्षोऽपि निरस्तः। वेदान्तसाङ्ख्यमतावलम्बनेनैव तादृशकारणस्य शङ्कितत्वादिति। कार्यं विचित्रकारणवदिति घटकार्यं पटकारणविजातीयकारणजन्यं पटकार्यविजातीयकार्यत्वादित्यर्थः, तथाच ईदृशानुमानेन कार्ये विभिन्न-विजातीयकारणजन्यत्वस्य सिद्धत्वात् नाभिन्नकारणजन्यत्वं न वा एकजातीयकारणजन्यत्वं कार्यजातस्येति समुदिततात्पर्यम्। भोगस्य प्रतिनियतात्मवृत्तित्वादिति, भोगस्य सुखादिसाक्षात्कारस्य, प्रतिनियतात्मवृत्तित्वात् प्रत्यात्मनियमत्वात्, तथाच कारणं कार्यसमानाधिकरणं कार्यजनकत्वात् इति सामान्यव्याप्त्या अदृष्टं भोगसमानाधिकरणं भोगजनकत्वात् इति विशेषव्याप्त्या च अदृष्टस्य भोगसामानाधिकरण्यं सिद्धं न तु भोग्यनिष्ठत्वम्। ननु समवायेन अदृष्टस्य भोग्यनिष्ठत्वेऽपि कालिकसम्बन्धेन भोगसामानाधिकरण्यात् न

अकस्मादेव भवति, न किञ्चिदपेक्ष्य कार्य्यमिति, अतएव "अनिमित्ततोभावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्" इति पूर्वपक्षसूत्रं (न्यायसूत्रं ४। २२) तत्राह।

हेतु-भूतिनिषेधोन स्वानुपाख्यविधिर्न च।
स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥ ५ ॥

अकस्मादिति किं हेतुनिषेधपरं भवननिषेधपरं वा, स्वातिरिक्तहेतुनिषेधपरं पारमार्थिकहेतुनिषेधपरं वा, अत्रोभयथाहेतुकत्वमलीकहेतुकत्वञ्च पर्य्यवस्यति, स्वभावादित्यर्थपरं वा।

---

विरोध इत्यत आह, अतिप्रसङ्गादिति तथाच कालिकसम्बन्धेन भोगं प्रति कालिकसम्बन्धेन अदृष्टस्य कारणत्वे पुरुषान्तरीयादृष्टात् पुरुषान्तरीयभोगापत्तिः स्यादिति। न च पुरुषविशेषान्तर्भावेण कार्य्यं कारणभावे न तदापत्तिरिति वाच्यम्। पुरुषविशेषान्तर्भावेण कार्य्यं कारणभावे अनन्तकार्य्यं कारणभावप्रसङ्गात् ॥ ४ ॥

कादाचित्कम् अहेतुकं भावत्वात् गगनवदिति सत्प्रतिपक्षमाशङ्कते, अकस्मादेवेति। न किञ्चिदपेक्ष्यमिति न स्वाव्यवहितनियतपूर्ववर्त्तितावच्छेदकयत्किञ्चिद्धर्मकम्, अनिमित्तपदस्याप्ययमर्थः, भावपदं यत्नपरं तेन ध्वंसस्यापि सकारणकत्वनिरासः। तथाच कादाचित्कत्वं न हेतुसाधकमप्रयोजकत्वादिति भावः। अनिमित्ततो भावोत्पत्तिरिति अनिमित्तत इति प्रथमान्तात् तसिल् अनिमित्ता भावोत्पत्तिरित्यर्थः, तथाचायं प्रयोगः घटाद्युत्पत्तिः न कारणनियम्या उत्पत्तित्वात् कण्टकतैक्ष्ण्याद्युत्पत्तिवत्। तैक्ष्ण्यं संस्थानविशेषः, आदिपदात् मयूरचित्रादिपरिग्रहः। अवधेर्नियतत्वतः नियतावधिककार्य्यदर्शनात् कार्य्यस्य नियतकालवृत्तित्वदर्शनादिति यावत्, न हेतुनिषेधः न कारणप्रतिषेधः, न भूतिनिषेधः न भवनप्रतिषेधः, स्वानुपाख्यविधिः स्वं कार्य्यम्, अनुपाख्यम् अलीकं, तयोः विधिः कारणत्वविधाने न, नैव स्वभाववर्णना स्वभावस्य हेतुत्वम् इति समुदितकारिकार्थः। अकस्मादित्यत्र किंशब्दो यदि हेतुमात्रपरः तदा तस्य नञा सम्बन्धात् हेत्वभावे भवनं लभ्यते, यदि तु भवनक्रियाया नञा सम्बन्धः तदा प्रसज्यप्रतिषेधे भवननिषेधोऽर्थः, न च किंशब्दसमस्तनञा वाचं भवनान्वय इति वाच्यम्।

खं कार्य्यम्, अनुपाख्यम् अलीकम्। अवधेर्नियतत्वतः नियतावधिककार्य्यदर्शनात् अनियतावधिकत्वे च कादाचित्कत्वव्याकोप इति भावः ॥ ५ ॥

ननु अनादिश्चेत् कार्य्य-कारणप्रवाहः कादाचित्कत्वान्यथानुपपत्त्या कल्प्यस्तदा वह्नित्वावच्छिन्नस्य तृणादिव्यभिचारितया तृणाद्यकारणत्वे कादाचित्कत्वव्याकोपः कारणान्तरस्य च वक्तुमशक्यत्वात्। तत्र वह्न्यनुकूलैकशक्तिमत्त्वेन कारणता शक्तिश्च पदार्थान्तरं प्रतिव्यक्ति नाना अनित्ये अनित्या "नित्ये नित्यैव सा शक्तिर-

---

अ-मा-नो-ना निषेधवचनाः इति कोषात् अकारस्य निषेधार्थकस्य अशब्दस्यापि प्रयोगात्। तदुभयं निरस्यति हेतु-भूतीति। यदि विशिष्ट एव नञोऽन्वयात् हेतुमत्त्वभवनाभावो लभ्यते तदा एकविशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात् पर्य्युदासनञा वा हेतुव्यतिरिक्ताद्भवनं लभ्यते, हेतुव्यतिरिक्तञ्च कार्य्यस्वरूपम् अलीकञ्च, तथाच स्वानुपाख्यविधिः तं निषेधति स्वानुपाख्येति, यदि किंशब्दः अत्र अप्रश्नार्थकः स्वभावपरः तदा स्वभावादेव कार्य्यस्य कादाचित्कत्वमित्यर्थः, तत्राह, स्वभावेनेति। उभयथेति हेतु-भूतिनिषेधपक्षे स्वानुपाख्यविधिपक्षे चेत्यर्थः, प्रथमपक्षमभिप्रेत्याह, अहेतुकत्वमिति, हेतुनिषेधपक्षे कार्य्यस्य हेतुनिरपेक्षत्वमर्थः, भूतिनिषेधपक्षे कार्य्यस्य अनुत्पत्तिकत्वमर्थः, अन्यपक्षमभिप्रेत्याह, अलीकहेतुकत्वञ्चेति, न च अन्ते कार्य्यहेतुकत्वम् अलीकहेतुकत्वञ्च इदं कथम् अलीकहेतुकत्वं पर्य्यवस्यतीत्युक्तिः सङ्गच्छते इति वाच्यम्। यतः कार्य्यस्य कार्य्यपूर्ववर्त्तित्वासम्भवात् कार्य्यहेतुत्वं न सम्भवति अतः कार्य्यहेतुकत्वपक्षेऽपि अलीकहेतुकत्वे पर्य्यवसानम् अत उक्तं पर्य्यवस्यतीति। अनियतावधिकत्वे कार्य्यस्य नियतकालावच्छित्त्वे, कादाचित्कत्वव्याकोपः पूर्वोक्तकादाचित्कत्वव्याघात इत्यर्थः ॥ ५ ॥

कादाचित्कत्वस्य सहेतुकत्वव्यभिचरिततया न सहेतुकत्वानुमापकत्वं सम्भवति इत्याशङ्कां निराकरोति, नन्वनादिश्चेदित्यादिना, ननु वह्नेः तृणादिजन्यतया कथं तदन्यभावेऽपि कादाचित्कत्वं सहेतुकत्वव्यभिचारि इत्यत आह, वह्नित्वावच्छिन्नस्येति तृणसमवधानं विनापि मण्यादिसमवधानात् मण्यादिसमवधानं विनापि तृणसमवधानात् वह्न्युत्पत्तेः न तृणादिकं वह्निकारणम्। ननु तृणादेः कारणत्वासम्भवेऽपि तृणादिभिन्नं-

नित्ये भावहेतुजा" इति तत्सिद्धान्तात्। वह्न्यनुकूला तृणारणिमणिनिष्ठा शक्तिर्नित्येति तु मतान्तरम्। न्यायमतन्तु तृणादिजन्यतावच्छेदकं वैजात्यमेव, विजातीयेष्वेकजातीयकार्य्यानुकूलशक्तिकल्पने धूमादिना वह्न्यनुमानं न स्यात् न स्याच्च तृण-फुत्कारसमवधानस्य निर्मन्थनारणिसमवधानस्य प्रतिफलितरविकिरणमणिसमवधानस्य च प्रतिनियमः कारणतावच्छेदकावच्छिन्नस्यैव कारणतावच्छेदकान्तरावच्छिन्नसमवधाने कार्य्यजननस्य दृष्टत्वात् फुत्कारमणिसम्बन्धादितोऽपि वह्न्यापत्तेः। यदि च तृणफुत्कारादिसम्बन्धादिषु वह्न्यनुकूला एका शक्तिः कल्प्यते तदा नैतत् समाधानं परन्तु तार्णवह्न्यादिनिष्ठं वैजात्यं प्रत्यक्षसिद्धं दीपत्वादिवदिति न पदार्थान्तरशक्तिकल्पनम्। अमुमर्थमाह,—

---

शक्तिकारणमन्तु इत्यत आह, कारणान्तरस्य चेति। तथाच सहेतुकत्वस्य कादाचित्कत्वव्यापकत्वे व्यापकस्य सहेतुकत्वस्याभावात् वह्नौ व्याप्यस्य कादाचित्कत्वस्याभावप्रसङ्गात् सहेतुकत्वासिद्धौ अदृष्टासिद्धौ न अदृष्टाधिष्ठातृतया न वा क्षित्यादिकर्तृतया ईश्वरसिद्धिरिति भावः। अत्र मीमांसकाः समाधत्ते नित्येत्यादिना, वह्न्यनुकूलैकशक्तिमत्त्वेन वह्न्यनुकूलैकजातीयशक्तिमत्त्वेनेत्यर्थः, अतः शक्तेः प्रतिव्यक्तिनानात्वेऽपि न क्षतिः। भावहेतुजा भावः पदार्थः तस्य यो हेतुः तस्मात् शक्तिर्जायत इत्यर्थः, तथाच वह्निष्ठा शक्तिः कल्प्यते तस्य यो हेतुः स एव तन्निष्ठशक्तेः हेतुः न तु हेत्वन्तरकल्पनापेक्षेति भावः। तत्सिद्धान्तात् मीमांसकसिद्धान्तादित्यर्थः। मतान्तरं मीमांसकविशेषाणां मतम्। नैयायिकसमाधानमाह, न्यायमतन्त्विति। वैजात्यमेवेति, तथाच तार्णत्वारणेयत्वादिवैजात्यस्य तृणादिजन्यतावच्छेदकत्वान्न व्यभिचारः इति भावः। धूमादिनेति यथा विजातीयानां तृणादीनाम् एकजातीयवह्न्यनुकूलशक्तिमत्त्वेन कारणत्वं, तथा विजातीयानां वह्न्यादीन्धनादीनामपि एकजातीयधूमकार्य्यानुकूलशक्तिमत्त्वेन कारणत्वं, तथाच कार्य्यतावच्छेदकावच्छिन्नस्य कारणतावच्छेदकावच्छिन्नानुमापकत्वात् वह्नित्वस्य धूमकारणतानवच्छेदकत्वे धूमत्वावच्छिन्नस्य तदवच्छिन्नानुमापकत्वं न स्यादिति भावः। प्रतिनियमः तृणाद्यसमवधानसहकारित्व शक्तिविशेषजनकत्वनियम इत्यर्थः। फुत्कार-मणिसम्ब-

**प्रवाहो नादिमानेष न विजात्येकशक्तिमान् ।**
**तत्त्वे यत्नवता भाव्यमन्वय-व्यतिरेकयोः ॥ ६ ॥**

एष कार्य्य-कारणप्रवाहः नादिमान् अनादिः। विजातीयेषु तृणादिषु एकशक्तिमान् न प्रवाहः। अन्वय-व्यतिरेकयोस्तत्त्वे नियतत्वे निर्वाह्ये यत्नवता भाव्यं यत्नः करणीयः। वैजात्यं कल्पनीयमिति भावः। वह्निसामान्यं प्रति तु विजातीयोऽप्यस्पर्शवत्तेज एव कारणम् ॥ ६ ॥

---

भ्यादितोऽपीति, तृणत्वादेः कारणतानवच्छेदकतया तदवच्छिन्नसहकारितायाः फुत्कारादेरसम्भवतया वह्न्यनुकूलशक्तिमत्त्वावच्छिन्नस्यैव सहकारितया फुत्कार-सहकारेण मण्यादितोऽपि वह्न्युत्पत्त्यापत्तिरिति भावः। दीपत्वादिवदिति, यथा दीपत्वम् आलोकविशेषजनकतावच्छेदकं वैजात्यं प्रत्यक्षसिद्धं तथा तार्णत्वादिकमपि तृणादिजन्यतावच्छेदकं विलक्षणवैजात्यं प्रत्यक्षसिद्धमिति। न पदार्थान्तरशक्तिकल्पनमिति, तथाच लाघवमेवातिरिक्तशक्तिकल्पने बाधकमिति भावः। असमर्थमाहेति असमर्थमभिप्रेत्याहेत्यर्थः।

कार्य्य-कारणप्रवाह इति कार्य्याणां कारणानाञ्च प्रवाह इत्यर्थः, न आदिमान् न अवधिमान् न हेत्वनधीनकार्य्यकालीन इति यावत्, तथाच कार्य्यमात्रं सहेतुकं न तु किमपि वह्न्यादिकार्य्यम् अहेतुकमिति वह्न्यादौ कादाचित्कत्वं न सहेतुकत्वव्यभिचारि, न वा कार्य्यत्वावच्छेदेन सहेतुकत्वसाधने वह्न्यादावंशतः सिद्धसाधनमिति भावः। विजातीयैरिति कारिकोक्तविजातिपदस्यार्थः, एकशक्तिमानिति विजातीयतृणादिनिष्ठैकशक्त्यवच्छिन्नकारणताश्रय इत्यर्थः। ननु कथं प्रागुक्तव्यभिचारवारणमित्यत आह, कारिकायां तत्त्व इति, व्याख्यायाम् अन्वय-व्यतिरेकयोस्तत्त्व इति वह्न्याद्यन्वय व्यतिरेकयोः तृणाद्यन्वय-व्यतिरेकनियतत्व इत्यर्थः, वैजात्यं कल्पनीयमिति, तथाच तृणादिजन्यतावच्छेदकत्वेन वह्न्यादिनिष्ठतार्णत्वादिवैजात्यं कल्पयित्वा तेषामेव तृणादिजन्यतावच्छेदकत्वस्य कल्पनीयत्वात् न प्रागुक्तव्यभिचार इति भावः। ननु तार्णत्वाद्यवच्छिन्नं प्रति तृणादेः कारणत्वेऽपि वह्नित्वावच्छिन्नं प्रति शक्तिमत्त्वेन कारणत्वस्यावश्यमङ्गीकर्त्तव्यत्वात् शक्तेरवश्यकल्पनीयत्वमित्यत आह, वह्निसामान्यं प्रति त्विति ॥ ६ ॥

ननु यथा एक एव दीपः आलोककारी वर्त्तिविकारकारी घटादिप्रकाशकारी च तथा एकमेव ब्रह्म किं वा कार्य्य-कारणयोरभेदात् प्रतिपुरुषं विभिन्नबुद्धेरभिन्ना प्रकृतिरेव हेतुरस्तु तथाच नादृष्टाधिष्ठातृतयेश्वरसिद्धिरित्यत्राह,

एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न।
शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ॥७॥

एकस्य कारणस्य नियम्यो न कार्य्याणां क्रमः, समस्य एकजातीयकारणस्य प्रयोज्यश्च न कार्य्याणां वैचित्र्यं वैजात्यं, तथाच क्रमिककार्य्यनिर्वाहकतया क्रमिककारणसिद्धिः, विजातीयकार्य्यजनकतया च विचित्रहेतुसिद्धिरित्यर्थः। शक्तिभेदादेव सजातीयादेकस्मात् कार्य्यवैजात्यम् इति शङ्कां निराकुरुते शक्तिभेदो न

---

ननु कार्य्यस्य क्रमिकत्वं न क्रमिककारणसाधकं, तथा कार्य्यवैचित्र्यमपि न विचित्रकारणकत्वसाधकम्, आलोक-वर्त्ति-विकार-घटादिप्रकाशेषु विचित्रेषु च एकस्यैव दीपस्य हेतुत्वेन व्यभिचारादिति बाधकाभावेन सकलकार्य्येषु एकहेतुकत्वं सिद्ध्यतीत्याशयेनाह, नन्वित्यादिना। एकमेव ब्रह्मेति वेदान्तमतसमुत्थानम्, अभिन्ना प्रकृतिरेवेति सांख्यमतसमुत्थानम्, एतेन एकजातीयकारणमुक्तम्। सांख्यमते पुरुषाणां भेदात् प्रतिपुरुषञ्च महत्तत्त्वापरपर्य्यायाणां बुद्धीनां भेदेऽपि प्रकृतिविकारत्वात् प्रकृतेश्चैकत्वात् एकजातीयत्वम्। नादृष्टाधिष्ठातृतयेति। न च वेदान्तादिमते अदृष्टस्य निष्प्रयुक्ततया कथमेतत्सङ्गतिरिति वाच्यम्। वेदान्तादिमतमवलम्ब्य चार्वाकैरित्यस्य शङ्कमानत्वात्सङ्गतेरिति।

कारिकायाम् एकस्येत्यादि, षष्ठ्यर्थः नियम्यत्वं, क्वापि कुत्रापि कार्य्ये क्रमः क्रमिकत्वं न एकस्य न एककारणनियम्यमित्यर्थः। व्याख्यायां क्रम इति क्रमः क्रमिकत्वम् अयौगपद्यम् एककार्य्यानन्तरक्षणोत्पत्तिकत्वं कार्य्यान्तरस्येति यावत्। तथाच एतद्घटो यदि तद्घटकारणमात्रजन्यः स्यात् तदा तद्घटोत्पत्तिक्षणोत्पत्तिकः स्यादित्यापत्तिरेव कार्य्यजातस्य एकमात्रकारणजन्यत्वे बाधिकेति भावः। कार्य्याणां वैचित्र्यमिति तथाच पटो यदि घट-

चाभिन्न इति। चो हेतौ, न शक्तिभेदः अभिन्नो यतः, शक्ति-शक्तिमतोरभेदात्, भेदे च तस्यैव कारणत्वस्वीकारे एकमात्रकारणत्वभङ्ग-प्रसङ्गो द्वैतापत्तिश्चेत्यर्थः। ननु स्वभावादेव एककारणस्य विचित्र-कार्य्यनिर्वाहकत्वम् इत्यत्राह, स्वभावो दुरतिक्रम इति। एकस्मिन् कार्य्ये जनयितव्ये यः स्वभावः कार्य्यान्तरजननकाले तस्यानुवृत्तौ दहनस्यापि जलादित्वं स्यात् स्वभावस्य दुरपह्नवत्वादित्यर्थः, प्रदीप-स्थले तत्तत्कार्य्यसामग्रीभेदकल्पनादिति भावः ॥ ७ ॥

ननु दण्डादिर्घटादौ हेतुरस्तु न;तु यागादिः स्वर्गादिहेतुरित्य-त्राह ।

विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफला वापि (१) विप्रलम्भोऽपि नेदृशः ॥ ८ ॥

विश्वेषां परलोकार्थिनां स्वर्गाद्यर्थं यागादौ प्रवृत्तिर्विफला न, न वा दुःखमात्रफलिका, प्रवृत्तेरिष्टसाधनताधीसाध्यत्वात्। न च

---

कारणसमानजातीयकारणमात्रजन्यः स्यात् तदा घटविजातीयो न स्यादित्यापत्तिरेव कार्य्यजातस्य एकजातीयकारणजन्यत्वे बाधिकेति भावः। सजातीयादेकस्मादिति, सजातीयादिति साङ्ख्यमताभिप्रायेण, एकस्मादिति वेदान्तमताभिप्रायेण, न शक्तिभेद इति क्रमिकत्वादिनियामक इति शेषः। अभिन्नो यत इति धर्म्मिभिन्नो यत इत्यर्थः। ननु स्वभावादेवेति, पूर्वं कार्य्यस्य स्वीयस्वभावाधीनत्वं दूषितम् इदानीम् एककारणगत-स्वभावमादायाशङ्केति भावः। दहनस्यापि जलादित्वं स्यादिति एकस्मिन् कार्य्ये यस्य स्वभावस्य जनकत्वं कार्य्यान्तरेऽपि तस्यैव जनकत्वं वाच्यम् अन्यथा एकस्य स्वभावभेदा-देकत्वादिहानिप्रसङ्ग इत्येकस्वभावजन्यत्वेन विजातीयकार्य्याणामप्येकजात्यं स्यादित्यर्थः। दुरपह्नवत्वादिति दुष्परिहार्य्यत्वादित्यर्थः। तत्तत्कार्य्यसामग्रीभेदेति वर्त्तिसंयोगादिघटित-सामग्रीभेदकल्पनादित्यर्थः। अन्यथा आलोकादीनां युगपदुत्पत्त्यापत्तिरिति ॥ ७ ॥

---

(१) दृष्टलाभफला नापि इति क्वचित् पुस्तकस्य पाठः स एव समीचीनः।

दृष्टलाभफला पूजा-ख्याति-धनादिफला, तन्निरपेक्षैरपि तदाचरणात्। केनचित् प्रतारकेण स्वर्गादिफलकतया यागादिकं प्रकल्प्य स्वयमनुष्ठाय वञ्चितो लोकः प्रवर्त्तते इत्यत्राह, विप्रलम्भोऽपि नेष्टय इति, क एवं लोकोत्तरो यः परप्रतारणार्थं नानाविधक्लेशहेतुकर्मभिरात्मानमवसादयेत्। तथाच यागादिप्रवृत्तिरेव स्वर्गादिफलकत्वे यागादेर्मानमिति ॥ ८ ॥

ननु यागादिकं स्वर्गादिहेतुरस्तु, न तु तज्जन्यादृष्टं तथेत्यत आह,—

चिरध्वस्तं फलायालं न कर्मातिशयं विना।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥९॥

चिरध्वस्तं यागादि कर्म्म अतिशयं तत्फलानुकूलव्यापारं विना फलाय न अलं न समर्थं, चिरध्वस्तकारणस्य व्यापारद्वारैव हेतुत्वं, यथा अनुभवस्य संस्कारद्वारकस्य स्मृतौ। ननु भोग्यनिष्ठमदृष्टं

---

घटादेः प्रत्यक्षसिद्धतया तत्र दण्डादेर्हेतुत्वेऽपि स्वर्गादौ प्रमाणाभावात् तद्धेतुत्वं यागादेरसिद्धमित्याशङ्कां निरस्यति, नन्वित्यादिना। यागादेर्मानमितीति, तथाच यागः सफलः अविगीतशिष्टाचारविषयत्वात् इत्यनुमानेन सामान्यतः सफलत्वे सिद्धे दृष्टफलकत्वबाधात् अदृष्टफलकत्वसिद्धौ अदृष्टाधिष्ठातृतयेश्वरसिद्धिरिति भावः ॥ ८ ॥

नन्वित्यादि, न तु तज्जन्यादृष्टमिति, तथाच यागस्य स्वर्गहेतुत्वेऽपि स्वजन्यध्वंसवत्त्वसम्बन्धेनैव हेतुत्वं न तु स्वजन्यादृष्टवत्त्वसम्बन्धेनेति भावः। चिरध्वस्तमिति फलोत्पत्तिप्राक्क्षणवृत्तिध्वंसप्रतियोगीत्यर्थः, अचिरविनष्टस्य दृष्टद्वारापि कारणतासम्भवः। चिकीर्षाद्वारा कृतिसाध्यताज्ञानस्य प्रवृत्ताविवेति चिरपदं ध्वंसरूपक्रियाविशेषणम्। व्यापारद्वारैव भावरूपव्यापारद्वारैवेत्यर्थः, हेतुत्वमिति, न च यागस्य ध्वंसद्वारैव हेतुत्वं न त्वदृष्टद्वारेति वाच्यम्। स्वर्गधारापत्तेः स्वर्गोत्पादानन्तरमपि ध्वंसरूपव्यापारस्य सत्त्वात् प्रतियोग्यभावयोरेकस्मिन् कार्य्ये हेतुत्वे प्रमाणाभावाच्च। अत्रायं प्रयोगः चिरध्वस्तयागादिकं स्वजन्यव्यापारवत्त्वसम्बन्धेन फलजनकं साक्षात्सम्बन्धेन फलोत्पत्तिप्राक्क्षणावृत्तित्वे सति

कारणमस्तु इति जिज्ञासायामाह, सम्भोग इति, निर्विशेषाणाम् अदृष्टरूपगुणशून्यानाम् आत्मनां सम्भोगः प्रत्यात्मनियतो भोगः, संस्कृतैरपि अदृष्टवत्तया स्वीकृतैरपि भूतैर्न स्यात्, भूतानां शरीरादीनां सर्वात्मसाधारण्यात्, तददृष्टाकृष्टैरेव शरीरेन्द्रियादिभिः तद्भोगजननादित्यर्थः ॥ ९ ॥

ननु भोग्यादिनिष्ठ एव धर्मविशेषोऽतीन्द्रियः प्रतिनियतभोगादि-

---

फलजनकत्वात् स्मृतिजनकानुभववदिति। ननु यागकर्तृस्वर्गं प्रति शरीरेन्द्रिय-स्रक्चन्दनादिविशेषाणां हेतुतानियमाय तेषु यागजन्यसंस्कारविशेषः भोगकारणतावच्छेदकतया अवश्यमङ्गीकार्यः तस्यैव स्वर्गजनकत्वसम्भवे आत्मनिष्ठादृष्टकल्पनं व्यर्थमित्याशङ्कते, नन्विति, सम्भोग इतीति, तथाच यागजन्यादृष्टवद्भूतत्वेन स्वर्गहेतुत्वे प्रत्यात्मनियतभोगानुपपत्तिरिति भावः। अत्र हेतुमाह, सर्वात्मसाधारण्यादिति आत्मनः सर्वमूर्त्तसंयोगानुयोगित्वेन शरीरादीनां सर्वात्मसंयुक्तत्वादित्यर्थः। तथाच अदृष्टस्य भोग्यनिष्ठत्वे भोगं प्रति स्वाश्रयसंयुक्तत्वसम्बन्धेन अदृष्टहेतुत्वस्य वाच्यतया पुरुषान्तरकर्मजन्यादृष्टेन पुरुषान्तरभोगापत्तिरिति भावः। न च तत्पुरुषीयस्वर्गं प्रति तत्पुरुषीययागजन्यादृष्टं हेतुरिति विशिष्य कार्य्य-कारणभावात् न तदापत्तिरिति वाच्यम्। पुरुषविशेषमन्तर्भाव्य अनन्तकार्य्य-कारणभावकल्पनापेक्षया समवायघटितप्रत्यासत्त्या भोगादृष्टयोः कार्य्य-कारणभावस्य लघुत्वात्। ननु भोग्यनिष्ठादृष्टं विना कथं भोग्यनियम इत्यत आह, तददृष्टाकृष्टैरेवेति, तथाच तत्पुरुषीयादृष्टजन्यशरीरादिर्भोगं प्रति स्वजनकादृष्टवत्त्वसम्बन्धेन भूतानां हेतुत्वात् भोग्यविशेषनियमोपपत्तिरिति भावः। न च भोग्यनिष्ठादृष्टस्य "प्रत्यात्मनियमाद्भुक्तेः" इत्यनेन पूर्वमेव निरस्तत्वात् "सम्भोगो निर्विशेषाणाम्" इत्यस्य पौनरुक्त्यमिति वाच्यम्। "सम्भोगो निर्विशेषाणाम्" इत्यादेः प्रागुक्तस्यैव विवरणत्वेन पौनरुक्त्यासम्भवात्। न चादृष्टस्य भोग्यनिष्ठत्वेऽपि अदृष्टाधिष्ठातृतया ईश्वरसिद्धिसम्भवात् अदृष्टस्य आत्मनिष्ठत्वसाधनमर्थान्तरमिति वाच्यम्। यददृष्टाधिष्ठातृतया ईश्वरसिद्धिः तस्यादृष्टस्य आत्मनिष्ठत्वं न भोग्यनिष्ठत्वमिति वस्तुगतिमनुरुध्यैव अदृष्टस्य आत्मनिष्ठत्वसाधनादिति ॥ ९ ॥

ननु नश्वी दाखानुकूलमक्लिवन् भोगसाधनवनितादिशरीरे भोगजनकतावच्छेदिका,

नियामकोऽस्तु, यथा दाहादिनियामको वह्न्यादिनिष्ठः शक्तिभेदः, अन्यथा तादृशादेव करतलानलसंयोगात् सति प्रतिबन्धके दाहापत्तेः। न च मण्याद्यभाव एव कारणमस्त्विति वाच्यम्। कारणत्वस्य भावत्वव्याप्तत्वात् किन्तु शक्तिनाशं करोतीति मण्यादिः प्रतिबन्धक उच्यते, तथाच शक्तिः स्वीकार्य्या इत्यत आह।

भावो यथा तथाऽभावः कारणं कार्य्यवन्मतः।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः॥१०॥

यथाऽन्वय-व्यतिरेकादिना अभावो ध्वंसः कार्य्यः तथाऽभावः कारणमपि कारणत्वं भावत्वव्याप्यमित्यस्याप्रयोजकत्वात्। अकिञ्चित्करस्य प्रतिबन्धकत्वानुपपत्तिरित्यत आह, प्रतिबन्ध इति, विसा-

---

शक्तिः स्वीकार्य्येति सा च यागादिजन्यादृष्टरूपा तदतिरिक्तकल्पने गौरवात् तथाऽदृष्टं चाधे प्रथमतो जातं तत्तद्वनितादिशरीरे जाते तन्निष्ठतया भोगजनकतावच्छेदकमिति नादृष्टस्यात्मनिष्ठत्वमभिप्रायेणाह, ननु भोग्यादिनिष्ठ एवेति, तथाचायं प्रयोगः, कारणानि स्वजन्यकार्य्यानुकूलाविष्टातीन्द्रियधर्मवन्ति कारणत्वात् वह्न्यादिवत् इति, अनुद्भूतरूपादिमादायांशतः सिद्धसाधनवारणाय स्वजन्यानुकूलेति, प्रयत्नवदात्मसंयोगवारणायाविष्टेति, उपष्टम्भवारणायातीन्द्रियेति। न चावच्छेदावच्छेदेन साध्यसाधने नांशतः सिद्धसाधनं दोष इति वाच्यम्। प्राचीनमते तस्यापि दोषत्वात्। अन्यथेति तादृशशक्त्यनङ्गीकार इत्यर्थः, तादृशादेवेति प्रतिबन्धकासमवधानदशायां यादृशात् करतलानलसंयोगात् दाहो जायते तादृशादित्यर्थः, ननु अभावस्याकारणत्वे कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वं कथं मण्यादौ सम्भवतीत्यत आह, किन्त्विति, तथाच तन्मते कारणताविघटकत्वमेव प्रतिबन्धकत्वं न तु कारणीभूताभावप्रतियोगित्वम् इति भावः।

कारिकायां भावो यथेति, यथा येन प्रकारेण, कारणताग्राहकान्वयव्यतिरेकानुविधानेनेति यावत्, भावः कारणं, तथा अभावोऽपि कारणम्। ननु कारणत्वस्य भाव-

मणौ कारणाभावः, स च प्रकृते मण्याद्यभावस्याभावो मण्यादिः तत्समवधानहेतुः पुरुष एव प्रतिबन्धकः, स्वार्थे कप्रत्ययेन च मण्यादौ प्रतिबन्धकपदप्रयोग इति भावः। मीमांसकास्तु उत्तेजकाभावकूटविशिष्टमण्यभावत्वेन हेतुत्वे गौरवात् लाघवाच्छक्तिर्नित्या वह्न्यादौ कल्प्यते। प्रतिबन्धके सति शक्तिकुण्ठनम्। यत्तु शक्तिः प्रथमतो वह्निकारणजन्या वह्निनिष्ठा, प्रतिबन्धकेन च तस्या विनाशे उत्तेजकेन च पुनर्जननम्। न च शक्तेरनियतहेतुकत्वम् इति वाच्यम्। शक्त्यनुकूलशक्तिमत्त्वेन कारणत्वादिति, तन्न, वह्निनिष्ठनानाशक्तिकल्पनापेक्षया उत्तेजकाभावविशिष्टमण्यभावस्यैकस्यैव वरं हेतुत्वौचित्यात्। तथाचाकुण्ठितशक्तिरेव तत्र कारणतावच्छेदिका कल्प्यते

---

त्वव्याप्यत्वमिति नियमे व्यभिचार इत्यत आह, कार्य्यवदिति, यथा ध्वंसरूपाभावस्य किञ्चिद्वस्तुनियतोत्तरवर्त्तित्वेन किञ्चिद्वस्तुकार्य्यत्वं तथा अभावस्य किञ्चिद्वस्तुनियतपूर्ववर्त्तित्वेन किञ्चिद्वस्तुकारणत्वं, भावत्वस्य कारणत्वव्याप्यत्वे तुल्ययुक्त्या कार्य्यत्वव्याप्यत्वमपि स्यात् इति भावः। ननु मण्याद्यभावस्य कारणत्वे सिद्धे मण्यादेः प्रतिबन्धकत्वमवश्यं वाच्यं तच्च मण्यादौ कथं सम्भवति, प्रतिपूर्वकबन्धधातूत्तरकर्त्तृविहितणकप्रत्ययसिद्धप्रतिबन्धकपदेन प्रतिबन्धकर्त्तृत्वबोधनात् अचेतने अकिञ्चित्कुर्वाणे मण्यादौ तदसम्भवादित्याह, व्याख्यायाम् अकिञ्चित्करस्येति। प्रतिबन्धकपदप्रयोग इति, तथाच प्रतिबन्धसमवधानहेतुभूतपुरुष एव प्रतिबन्धकपदस्य मुख्यप्रयोग इति भावः। एवञ्च वह्न्यादिनिष्ठदाहानुकूलातिरिक्तशक्तिरूपादृष्टाभावसिद्ध्या गौरवानुमानेन भोग्यनिष्ठादृष्टसिद्धिरिति तात्पर्य्यम्। न च अदृष्टरूपशक्तेः भोग्यनिष्ठत्वे केन रूपेण भोग्यानां भोगसाधनत्वमिति वाच्यम्। यथा वह्न्यादेः वैजात्यरूपेण दाहादिहेतुता तथा भोग्यशरीरादीनामप्यदृष्टजन्यतावच्छेदकवैजात्यादिनैव हेतुत्वात्। न चात्मन एवादृष्टं न तु भोग्यानामित्यत्र किं विनिगमकमिति वाच्यम्। अनन्तभोग्यनिष्ठानन्तादृष्टकल्पनापेक्षया एकात्मनिष्ठादृष्टकल्पनस्यैव लघुत्वात्। उत्तेजकाभावकूटेत्यादि, उत्तेजकत्वं प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वं, मन्त्रौषधाद्यभावविशिष्टमणेः प्रतिबन्धकत्वेन प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगिनो मन्त्रौषधादेरुत्तेजकत्वम्। शक्तिकुण्ठनमिति,

इत्याहुः। तन्न, शक्तिकुण्ठने प्रतिबन्धकस्य हेतुत्वमुत्तेजकस्य कुण्ठितत्वविनाशकत्वमित्याद्यनन्तशक्तिकल्पनापत्तेरिति दिक् ॥ १० ॥

ननु "व्रीहीन् प्रोक्षति" "व्रीहीनवहन्ति" इत्यत्र प्रोक्षणजन्यः कालान्तरभाव्यवघातजनको व्यापारो व्रीहिनिष्ठः कल्प्यते, "प्रोक्षिता एव व्रीहयोऽवघाताय कल्प्यन्ते" इति वाक्यशेषात्। किञ्च यो यद्गतफलार्थितया क्रियते स तन्निष्ठफलजनकव्यापारजनकः यागवत्, किञ्च व्रीह्यादीनामापरमाण्वन्तभङ्गे व्रीह्यादिनियमानुपपत्तिः। एवं मार्चकर्षणादिना भूमिनिष्ठा कृषिजन्या शक्तिर्निर्वाच्या।

अत्रोत्तरम्।

---

कुण्ठनं तिरोभावः, स च मीमांसकमते शक्तिनिष्ठः कश्चिदतिरिक्तपदार्थः। मीमांसकएकदेशिमतमुत्थाप्य दूषयति, यत्त्वित्यादिना, अनियतहेतुकत्वमिति कदाचित् वह्निकारणजन्यत्वं, कदाचिच्च उत्तेजकजन्यत्वमित्यर्थः, तथाचोभयसाधारणानुगतैकरूपाभावात् न कार्य्य-कारणभावसम्भव इति भावः। वरं मनागिष्टम्, अस्य न्यायमतसिद्धत्वात् मनागिष्टत्वम् ॥ १० ॥

मीमांसकः पुनः शङ्कते, नन्वित्यादिना, प्रोक्षणस्यावघातजनकव्यापारजनकत्वे प्रमाणं दर्शयति, प्रोक्षिता एवेति प्रोक्षणविशिष्टा एवेत्यर्थः, अवघातायेति, अत्र चतुर्थ्यर्थः जनकत्वं कल्पनं सम्बन्धः, आश्रयत्वम् आख्यातार्थः, एवञ्च प्रोक्षणविशिष्टव्रीहौ अवघातजनकत्वरूपसम्बन्धाश्रयत्वभाने विशेषणे प्रोक्षणेऽपि अवघातजनकत्वसम्बन्धावगतिरिति भावः। न च प्रोक्षणजन्यव्यापारः अदृष्टमेव तच्च पुरुषनिष्ठं न तु व्रीहिनिष्ठमिति वाच्यम्। तथा सति व्रीहीनित्यत्र संस्कार्यत्वावच्छिन्नवारिप्रक्षेपरूपधात्वर्थतावच्छेदकसंस्कारात्मकफलवत्त्वाभावेन द्वितीयानुपपत्तिः। तत्र प्रोक्षणस्योपलक्षणत्वं लाह, किञ्चेति, आपरमाण्वन्तभङ्ग इति परमाणौ अन्तोनाशो येषां तानि द्व्यणुकानि अभिव्याप्य भङ्गे नाशे इत्यर्थः, अभिविधावाङ्शब्दप्रयोगात्, तत्र प्रमाणं "नानुपमृद्य प्रादुर्भावात्" इति महर्षिसूत्रम्, उपमर्दनं बीजनाशः, तदभावे अङ्कुरप्रादुर्भावाभावात् इति सूत्रार्थः, पूर्ववर्त्तिनञ्पदस्य प्रादुर्भावेऽन्वयः। व्रीह्यादिनियमानुपपत्तिरिति, तथाच प्रलयोत्तरं पुनः सृष्टौ परमाणुभेदकाभावात् कीदृशैः परमाणुभिः व्रीह्याद्युत्पत्तिः कीदृशैर्वा यवाद्युत्पत्तिरिति नियमा-

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ ११ ॥

प्रोक्षणादिभिः संस्कारोऽदृष्टं पुंसः पुंसि इष्टः स्वीकृतः, प्रतिव्रीहि नानाशक्तिकल्पनापेक्षया एकस्यैवादृष्टस्यात्मनिष्ठस्य प्रोक्षणादिजन्यावघातजनकस्य लाघवेन कल्पनात्, दृष्टद्वाराभावे सति विहितस्य कालान्तरभाविफलानुकूलस्य धर्मजनकत्वकल्पनाच्च । संस्कृतो व्रीहिरिति प्रत्ययबलाच्च तस्य स्वरूपसम्बन्धेनैव व्रीहिनिष्ठत्वं कल्प्यते, एतेनाभिमन्त्रितपयःपानयागादावपि तत्तत्फलानुकूलमदृष्टं पुरुषनिष्ठं । व्रीहीनिति च शत्रून् प्रोक्षति इत्यादाविव प्रोक्षणादिजन्यजलसंयोगादिरूपपरसमवेतक्रियाजन्यफलशालितया कर्मता । यो यत्नतफलार्थितया क्रियते स तन्निष्ठफलजनकव्यापारजनक इति च शत्रुनिष्ठवधाद्यर्थक्रियमाणश्येनादौ स्वनिष्ठफलजनके व्यभि-

---

नुपपत्तिः, कल्प्यते च व्रीह्यादिपरमाणुषु यवादिपरमाणुषु च पृथक् पृथक् शक्तिः स्वीकार्या सैव व्रीह्यादिनियामिकेति भावः । दोषान्तरमाह, एकमित्यादि, तथाच लाघवपर्येन प्रशस्तिमयसम्पादिका शक्तिर्भूम्येव स्वीकार्येति भावः । एवञ्चात्र शक्तिसिद्धौ तद्दृष्टान्तेन भोग्येष्वेव यागजन्यशक्तिसिद्धिर्भविष्यतीति पूर्वपक्षतात्पर्यम् ।

प्रोक्षणादिजन्यातिशयसिद्धावपि तस्य व्रीहिनिष्ठत्वं न सिध्यतीत्याह, कारिकायां संस्कार इति, प्रोक्षणाभ्युक्षणादिभिरिति, प्रोक्षणाभ्युक्षणं जलं सुखाधोमुखहस्तेनापि-तरपाणविप्रक्षेपरूपे तथाच स्मृतिः । उत्तानेनैव हस्तेन प्रोक्षणं परिकीर्तितम् । न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतमिति । व्याख्यायाम् एकस्यैवादृष्टस्येति, एकस्यैवेत्यनेन लाघवमात्रं सूचितं, तथाच कालान्तरभाविफलानुकूलो व्यापारो लाघवेन एक एव सिद्धः तस्य व्रीहिसमवेतत्वे एकव्रीहिनाशात् तन्नाशे अवघातानुपपत्तिः । न च यावदाश्रयनाशात् तन्नाशः, लाघवादाश्रयनाशस्यैव तन्नाशकत्वात् । अतः अनाश्रया अधिकरणोऽप्येक एवादृष्टविशेषः तथा कल्प्यते इति सिद्धम् । दृष्टद्वाराभावे सतीति दृष्टाद्वारकत्वे सतीत्यर्थः, भोजनादौ व्यभिचारवारणाय एतद्विशेषणस्य सार्थक्यम् । तथाचात्र प्रयोगः प्रोक्षणम् अदृष्टजनकं दृष्टाद्वारकत्वे सति कालान्तरभाविफलजनकतया विहितत्वात् यागवदिति ।

चारि। यवाद्युत्पत्तिनियमार्थमाह स्वगुणा: परमाणूनां पाकजादयोविशेषा विशेषज्ञा:, तेन पाकजरूप-रसादिविशिष्टा: परमाणवस्तत्तत्कार्यमारभन्ते। चिकित्सास्थले तु धातुसाम्यमेव भेषजपानस्य रोगादिनाशे फले जनयितव्ये द्वारमिति भाव: ॥ ११ ॥

---

ननु व्यधिकरणादृष्टस्यावघातजनकत्वेऽतिप्रसङ्ग: इत्यत आह, तस्येति तादृशादृष्टस्येत्यर्थ:, स्वरूपसम्बन्धेनेति स्वजनकप्रोक्षणजनकाभिप्रायविषयत्वस्वरूपसम्बन्धेनेत्यर्थ:। केचित्तु स्वरूपसम्बन्धेन विषय-विषयिभावलक्षणस्वरूपसम्बन्धेनेत्यर्थ:, व्रीहिषु अदृष्टस्य समवायासम्भवेऽपि विषय-विषयिभावलक्षणस्वरूपसम्बन्ध: तत्र वर्त्तत एवेत्याहु:। ननु तथापि अभिमन्त्रितपय:पानादौ अपूर्वं शक्ति: स्वीकार्या इत्यत आह, एतेनेति दृष्टद्वाराभावे सतीत्यादियुक्तिवर्णनेनेत्यर्थ:। अभिमन्त्रितेति, अभिमन्त्रितत्वम् अभिमन्त्रणकर्मत्वम्, अभिमन्त्रणञ्च संस्कारविशेषानुकूलमन्त्रोच्चारणम्, तज्जन्यसंस्काररूपफलविशेषाश्रयत्वं कर्मत्वं। न च तादृशसंस्कार: कर्त्तर्य्येव न तदाश्रयत्वं पयस इति वाच्यम्। तस्योच्चारणकर्त्तृसमवेतत्वेऽपि पयसि स्वरूपसम्बन्धेन वर्त्तमानत्वात्। स्वरूपसम्बन्धेन तादृशाश्रयत्वबोध एवाभिमन्त्रधातुसमभिव्याहृतकर्मप्रत्ययानामाकाङ्क्षाकल्पनात् कर्त्तु: कर्मत्वं, कर्त्तृभिन्नक्रियाजन्यफलाश्रयत्वस्यैव कर्मत्वरूपत्वात्।[१] प्रोक्षधातुसमभिव्याहृतकर्मप्रत्ययस्य स्वरूपसम्बन्धेन क्रियाजन्यफलाश्रयत्वबोधकत्वव्युत्पत्तिकल्पनेन लौकिकवैदिकक्रियाजन्यफलसमवेतत्वरूपकर्मत्वबोधकत्वव्युत्पत्त्यैवोपपादयति, व्रीहीनिति चेति, परसमवेतेति कर्त्तृभिन्नसमवेतेत्यर्थ:, एतच्च कर्त्तु: कर्मत्ववारणाय। यथा पशून् प्रोक्षति इति लौकिकवाक्ये प्रोक्षणजन्यसंस्कारस्याभावेऽपि पशूनां कर्मत्वं तथा व्रीहीनित्यत्रापि कर्मत्वं न कश्चिद्दोष: पदमादधाति। यो यद्वंशेत्यादिनियमं दूषयति, यो यद्गतफलार्थितयेत्यादि, स्वनिष्ठफलेति अत्र फलपदं अनुकूलजनकादृष्टरूपव्यापारपरम्। न च मन्त्रादावेव दुरदृष्टं जायत इति वाच्यम्। "शास्त्रदेशितं फलमनुष्ठातरि" इत्युत्सर्गस्थापकस्य बाधकं विना त्यागायोगात् अनुमनुष्यन्ते नानामनुनिष्ठादृष्टकल्पनापेक्षया अनुष्ठातृनिष्ठमेकमेवादृष्टं जायते इति कल्पनाया लाघवाच्च। न च श्येनयागानन्तरमेव दैवादनुष्ठातुर्मरणादिना श्येनयागकर्त्तुर्मुक्तत्वे अनुपपत्ती न स्यात् मुक्तिकारणीभूततत्त्वज्ञानादे: सकलादृष्टनाशकत्वादिति वाच्यम्। श्येनयागजन्यानुकूलधानुकूल्ययागकर्त्तृनिष्ठपुण्यस्य तत्कर्त्तृभोगजनकतया तस्य तत्त्वज्ञानादिना नाशाभावेऽपि क्षतिविरहात् तदतिरिक्तादृष्टानामेव तत्त्वज्ञा

ननु यत्र पाकजोन विशेषस्तत्र वाय्वादौ कथमुद्भूतस्पर्शादि, करकादौ च प्रतिबद्धं द्रवत्वमिति, कथञ्च प्रतिमादौ प्रतिष्ठादेरुपयोगः, तथाच प्रतिष्ठाजन्या शक्तिश्चाण्डालादिस्पर्शनाश्या पूज्यताप्रयोजिका स्वीकार्य्या इत्यत आह,—

निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।
देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥१२॥

निमित्तभेदः अदृष्टभेदः, देवताः प्रतिष्ठाविधिना सन्निधानेनाहङ्कार-ममकारादिना आराधनीयतामासादयन्ति, प्रतिष्ठाविधिना

---

नाशाभ्युपगमात् । धातुसाम्यमिति धातवः विकृता वात पित्त-कफाः तेषां साम्यं विकारनिवृत्तिः । एवं माघकर्षणादिनापि न शक्तिर्जन्यते किन्तु कर्षणेन पूर्वभूमिनाशे मदीकरणानन्तरं विलक्षणा भूमिर्जन्यते, पक्षधरमिश्रैरप्येतदेवोक्तम् ॥ ११ ॥

कस्मिंश्चिद्वाय्वादौ उद्भूतस्पर्शादि कस्मिंश्चिच्च न, कस्मिंश्चित् जले करकादौ द्रवत्वप्रतिरोधः न सर्वत्र इत्यादौ शक्तिरेव नियामिका अवश्यं स्वीकार्य्या, एवं प्रतिमादौ प्रतिष्ठाविधिना पूज्यताप्रयोजिका शक्तिरेव वाच्या इति मीमांसकः शङ्कते, नन्वित्यादिना । कारिकायां निमित्तभेदसंसर्गादिति अदृष्टविशिष्टपदार्थसंयोगादित्यर्थः । उद्भवानुद्भवादय इति, उद्भवः उद्भूतस्पर्शादिः, अनुद्भवः अनुद्भूतस्पर्शादिः, आदिपदात् प्रतिबद्धद्रवत्वपरिग्रहः । तथाच उद्भूतस्पर्शादिकं यत्पुरुषीयभोगजनकं तदीयादृष्टजन्यमिति भावः । आराधनीयतामिति प्रतिमादय इति शेषः । आराधनीयत्वञ्च देवप्रीतिहेतुक्रियाधारत्वं, देवत्वञ्च वेदबोधितमन्त्रकरणकत्यागोद्देश्यत्वम् । केचित्तु देवानां जन्यप्रीत्यभावात् गौरवज्ञानजन्यप्रीतिस्वरूपयोग्यक्रिया आराधनपदार्थः, कर्मत्वञ्च गौरवज्ञानविषयत्वम् इत्याहुः । तन्न । अशरीरस्य परमेश्वरस्य जन्यज्ञान-जन्यप्रीत्याद्यभावेऽपि प्रतिमादौ पूजनीयस्य शरीरिणो विष्ण्वादेस्तत्सत्त्वे बाधकाभावात् । अतएव शब्दशक्तिप्रकाशिकायां जगदीशतर्कालङ्कारैर्विष्णुं पूजयेदित्यादौ प्रीत्याश्रयत्वरूपं कर्मत्वमुक्तम् । एतेन परमेश्वरस्य जन्यज्ञानाभावात् आत्मार्थज्ञानरूपयोरहङ्कार-ममकारयोः कथं तत्र सम्भव इति पूर्वपक्षोऽपि निरस्तः । अशरीरस्य परमेश्वरस्य जन्यज्ञानासम्भवेऽपि शरीरिणोविष्ण्वादेः आत्मार्थजन्यज्ञानसम्भवात् । अहङ्कार-ममकारादिनेति सन्निधानेनेत्यस्य विवरणं, यथार्थ-

देवतानां प्रतिमादौ अहङ्कार-ममकारौ, चाण्डालादिस्पर्शे च तादृशाभिमानाभावः। देवताचैतन्यविवादेऽपि यथार्थपूजितत्वधीः प्रतिष्ठितत्वधीश्च चाण्डालादिस्पर्शाद्यभावविशिष्टा पूज्यतानियामिका, तत्र चोपयोगिनी प्रतिष्ठा। वस्तुतस्तु प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शनादिसंसर्गाभावः प्रतिष्ठाध्वंसकालीनः पूज्यताप्रयोजकः "प्रतिष्ठितं प्रपूजयेदिति" तेन प्रतिष्ठाध्वंसस्यैव प्राप्तेरिति दिक् ॥ १२ ॥

---

पूजितत्वधीरित्यादिकं प्रत्यभिज्ञानत इत्यस्य विवरणम्, अहङ्कारः अहमेषा प्रतिमेत्येवंरूपः, ममकारः प्रतिमावयवादौ स्वीयत्वाभिमानरूपः। न च देवतानां विशेषदर्शित्वात् भ्रमरूपयोरहङ्कार-ममकारयोः कथं सम्भव इति वाच्यम्। विशेषदर्शनसत्त्वेऽपि आहार्यरूपयोस्तयोः सम्भवात्। न च जन्यतादृशाहार्यज्ञानस्याशुविनाशितया तादृशज्ञाननाशोत्तरं कथं प्रतिमादौ पूज्यत्वमिति वाच्यम्। तादृशज्ञानपदेन तादृशज्ञानजन्यसंस्कारस्य विवक्षितत्वात्। आद्यपूजायां पूजितत्वप्रत्यभिज्ञानासम्भवादुक्तं प्रतिष्ठितत्वधीश्चेति। यावदस्पृश्यस्पर्शनादिसंसर्गाभाव इति अत्र कूटघटकार्थे संसर्गपदम्, अन्यथा भेदादिघटितकूटप्रवेशे महागौरवापत्तिः। नन्वेकप्रतिष्ठाकालीनयावदस्पृश्यस्पर्शसंसर्गाभावः प्रतिष्ठान्तरध्वंसकालीनः कथं न पूज्यताप्रयोजकः, न च स्वप्रतियोगिकालीनत्वस्वसमानकालीनत्वोभयसम्बन्धेन प्रतिष्ठाध्वंसविशिष्टास्पृश्यस्पर्शसंसर्गाभावकूटस्य पूज्यताप्रयोजकत्वविवक्षणान्नैष दोष इति वाच्यम्। यत्र प्रतिष्ठाद्वितीयक्षणे अस्पृश्यस्पर्शः तृतीयक्षणे प्रतिष्ठाध्वंसः तत्र द्वितीयक्षणीयस्यास्पृश्यस्पर्शसंसर्गाभावस्य प्रतिष्ठाध्वंसकालीनत्वाभावात् कूटानन्तर्गततया तदितरकूटस्य द्वितीयक्षणेऽपि सत्त्वात् तादृशक्षणे पूज्यतापत्तेरिति चेत्, न, प्रतिष्ठाध्वंसविशिष्टकूटत्वावच्छिन्नाधिकरणत्वस्य पूज्यताप्रयोजकत्वविवक्षणात् कूटत्वे प्रतिष्ठाध्वंसवैशिष्ट्यञ्च स्वाधिकरणकालनिष्ठाधिकरणतानिरूपकतावच्छेदकत्व-स्वप्रतियोगिप्रतिष्ठाकालीनास्पृश्यस्पर्श-संसर्गाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वोभयसम्बन्धेन, तादृशप्रतिष्ठाद्वितीयक्षणे अस्पृश्यस्पर्शः तादृशप्रतिष्ठाकालीनास्पृश्यस्पर्शसंसर्गाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकं यत् कूटत्वं तत् न तादृशप्रतिष्ठाध्वंसाधिकरणकालनिष्ठाधिकरणतानिरूपकतावच्छेदकमिति नोक्तक्षणे पूज्यतापत्तिरिति विभावनीयम् ॥ १२ ॥

ननु तुलापरीक्षादौ परीक्षाविधिना शक्तिस्तुलादौ जन्यते, तया नमनोन्नमनादिकं फलं जन्यते, इत्यत आह,—

जयेतरनिमित्तस्य वृत्तिलाभाय केवलम् ।
परीक्ष्यसमवेतस्य परीक्षाविधयो मताः ॥ १३ ॥

जयस्तदितरः पराजयः, तन्निमित्तस्यादृष्टस्य परीक्षणीयपुरुषसमवेतस्य वृत्तिलाभाय फलानुकूलसहकारिलाभाय परीक्षाविधयो मताः स्वीकृताः। योऽहमनेन परीक्षाविधिना तुलामारूढः सोऽहं पापवान् निष्पापो वेति ज्ञानं सहकारि। यद्वा वृत्तिलाभाय जननाय, तथाच प्रतिज्ञानुरूपां शुद्धिमपेक्ष्य धर्मोऽशुद्धिमपेक्ष्याधर्मो जन्यते। एतेन ब्रह्मवधाकरणादिना पुरुषस्याजननात् कथं तस्य सहकारि तादृशज्ञानं स्यादित्यपि परास्तम् ॥ १३ ॥

सांख्यास्तु पुरुषश्चैतन्याश्रयः अकारणम्, अतएव कूटस्थो नित्यः। प्रकृतिश्चाचेतना परिणामिनी नित्या एका, प्रकृतेः प्रथमं परिणामो

---

तन्निमित्तस्यादृष्टस्येति 'तयोः' जय-पराजययोः, अदृष्टस्य शुभाशुभादृष्टस्य जयनिमित्तस्य धर्मस्य पराजयनिमित्तस्याधर्मस्येति यावत्। परीक्षणीयपुरुषेति पाप-तदभावयोरन्यतरवत्त्वेन निर्णेयपुरुषेत्यर्थः, फलानुकूलेति तादृशान्यतरैकनिर्णयानुकूलेत्यर्थः। ज्ञानं सहकारीति, वस्तुतः पापवतः निष्पापस्य वा तुलारोहणकाले सोऽहं पापवान् निष्पापो वा इति ज्ञानम् चाक्षुषार्थसंशयात्मकं जायते, तादृशज्ञानस्य पूर्वकृतकर्मजनितादृष्टसहकारित्वं, तत एव नमनोन्नमने जय-पराजयौ च जायेते इति भावः। शुद्धिः निष्पापत्वम्, अशुद्धिः पापम्। तथाच पापाभियुक्तो योऽहमनेन परीक्षाविधिना तुलामारूढः सोऽहं निष्पापः इति प्रतिज्ञा परीक्षाकाले अवश्यकर्तव्या, तत्र यदि सत्यप्रतिज्ञा भवति तर्हि तत्सहकृतपरीक्षाविधिना धर्मो जायते, अन्यथा चेत् फलमप्यन्यथा भवति, तादृशफलेनैव चरमं नमनोन्नमनादिकं जयः पराजयश्च भवति इति सर्वत्यादिकस्य तात्पर्यम् ॥ १३ ॥

सांख्यमतमुत्थाप्य निरस्यति सांख्यास्त्विति, अकारणम् अपरिणामी, तस्मिन् परि-

बुद्धिर्महत्तत्त्वं, तत्राष्टौ धर्माः ज्ञानाज्ञानैश्वर्यानैश्वर्य-वैराग्या-वैराग्य-धर्माधर्मरूपाः,. बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्माश्चेत्यष्टौ वा, भावनायास्तैरनङ्गीकारात् अनुभवस्यैव स्मृतिकाले सूक्ष्मतयावस्थानात्। अचेतनायाः प्रकृतिकार्य्याया बुद्धेश्चैतन्याभिमानान्यथानुपपत्त्या स्वाभाविकचैतन्यस्वरूपः पुरुषः सिद्धः धर्म्म-धर्म्मिणोरभेदात्। तत्र प्रकृतेर्महान् महतोऽहङ्कारस्तस्माद्रूप-रस-गन्ध स्पर्श-

---

णामिन एव कारणत्वादिति। अतएव अकारणत्वादेव, कूटस्थः जन्यधर्मानाश्रयः, परिणामिनीति कार्य्यरूपेणोद्भवः परिणामः तद्विशिष्टेत्यर्थः। एकेति "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानामित्यादिश्रुतेः, रजोगुणांशेन लोहितां सत्त्वगुणांशेन शुक्लां तमोगुणांशेन कृष्णामित्यर्थः। महत्तत्त्वमिति एतदेवान्तःकरणमुच्यते, बुद्ध्यात्मकमहत्तत्त्वं समष्ट्यात्मकं हिरण्यगर्भसूक्ष्मशरीरं, तद्व्यष्टयो नानाविधाः जीवानां सूक्ष्मशरीराणि। ज्ञानाज्ञानेत्यादि ज्ञानं प्रकृति-पुरुषविवेकेन देहात्मनोर्भेदज्ञानम्, अज्ञानं तद्विरोधि देहात्मनोरभेदज्ञानम्, ऐश्वर्य्यम् अणिमाद्यष्टविधं, तच्च योगजन्यादृष्टविशेषः, अनैश्वर्य्यम् ऐश्वर्य्यविरोधिधर्मविशेषः, न त्वैश्वर्य्याभावः घटादिसाधारणत्वापत्तेः, वैराग्यं रागनिवृत्तिहेतुर्धर्मविशेषः, अवैराग्यं विषयप्रवृत्तिहेतुरागविशेषः, धर्मः अभ्युदयहेतुशुभादृष्टम्, अधर्मः दुरदृष्टम्। ननु ज्ञानेच्छादेरात्मधर्मत्वात् तद्विशेषज्ञानरागादेः कथं बुद्धिधर्मत्वमित्यत आह, बुद्धीति, वाकारार्थे, तथाच बुद्धिप्रभृतिसामान्याश्रयत्वमपि बुद्धेरिति न विशेषवस्त्वानुपपत्तिरिति भावः। धर्माधर्मावेति शुभाशुभादृष्टसामान्यद्वयमित्यर्थः, सामान्य-विशेषभेदान्न पौनरुक्त्यम्। नन्वेतादृशपुरुषसत्त्वे किं मानमित्यत आह, चैतन्याभिमानेति चेतनोऽहं करोमीत्यादिरूपेत्यर्थः, तथाच अप्रसिद्धस्याभिमानासम्भवादवश्यं चैतन्यं स्वीकरणीयमिति भावः। चैतन्यस्वरूप इति, ननु पूर्वं चैतन्याश्रय इत्युक्तम् इदानीं चैतन्यस्वरूप इत्युक्तिः कथं सङ्गच्छते इत्यत आह, धर्मधर्मिणोरिति। तन्मात्रेत्यत्र महाभूतानि इति, तथाच गन्धात् क्षितिरुत्पद्यते, रसात् जलं, रूपात् तेजः, स्पर्शात् वायुः, शब्दादाकाशमिति क्रमः। मूलप्रकृतिरविकृतिरिति, मूलम् अनादिः, अविकृतिः अजन्या। षोडशेति, तथाच इन्द्रियाण्येकादश, महाभूतानि पञ्च, महदादयः सप्त, प्रकृतिश्चेति चतुर्विंशतितत्त्वानि, पुरुषमादाय पञ्चविंशतितत्त्वानि, पुरुषास्तु बहुविधाः व्यापकत्व-

शब्द-तन्मात्राणीति सप्त, चक्षुस्त्वक्घ्राण-रसना-श्रोत्र-मनांसि वाक्-पाणि-पाद-पायूपस्थानि इन्द्रियाणि, तन्मात्रैः पञ्च महाभूतानि पृथिव्यप्तेजोवाय्वाकाशानि जायन्ते। तदुक्तम् "मूलप्रकृतिरविकृति-र्महदाद्याः प्रकृतिविकृतयः सप्त। षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः"। पञ्च महाभूतान्येकादशेन्द्रियाणि चेति षोड़श। चैतन्यस्य नित्यस्य स्वाभाविकेष्टानिष्टविषयावच्छिन्नत्वस्वाभाव्येऽनिर्मोक्षः स्यात्, प्रकृत्यधीनत्वेऽपि विषयावच्छेद्यत्वस्य प्रकृतेर्नित्यतया तथैवानिर्मोक्षप्रसङ्गः, घटादेरनित्यस्यापि स्वाभाविकचैतन्यावच्छिन्नत्वे दृष्टादृष्टविभागानुपपत्तिश्च, इन्द्रियमात्रापेक्षोयदि विषयचैतन्यावच्छेदस्तथापि व्यासङ्गानुपपत्तिरतोमनः स्वीकार्य्यं यत्-सम्बन्धेन इन्द्रियस्य विषयीयचैतन्यावच्छेदनियामकत्वं। स्वप्नदशायां व्याघ्रत्वाभिमानिनो न नरोऽहमित्यभिमानः अतस्तन्नियमाय नियतविषयाभिमानव्यापारकोऽहङ्कारोऽपि स्वीकार्य्यः। जाग्रत्स्वप्न-सुषुप्तिषु श्वास-प्रश्वासदर्शनात् सव्यापारं यदनुवर्त्तते तद्बुद्धितत्त्वं

---

सिद्धश्चैवात्मस्वकीया इति सांख्यमतमिति भावः। ननु नित्यमेव चैतन्यं स्वाभाविषय-सम्बद्धमस्तु किं महदादिस्वीकारेण इत्याशङ्कायामाह, चैतन्यस्येति, स्वाभाविकेति स्वाभाविकम् अन्यानपेक्षणीयं यत् इष्टानिष्टात्मकविषयैः सह अवच्छिन्नत्वं अवच्छेदः सम्बन्ध इति यावत् तत्स्वाभाव्ये तत्स्वरूपत्वे इत्यर्थः। अनिर्मोक्षः स्यादिति तथाच चैतन्यस्य नित्यत्वेन सर्वदैव चैतन्यात्मकपुरुषस्य विषयसम्बद्धत्वे मोक्षो न स्यात् विषय-सम्बन्धध्वंसस्यैव मोक्षत्वात्, तयोरनित्यसम्बन्धोपगमे तत्सम्बन्धानित्यत्वे महदादिसम्बन्ध-स्यैव नियामकत्वमिति भावः। ननु प्रकृतेरेव विषयावच्छेद्यत्वनियामकत्वमस्त्वित्यत-आह, प्रकृत्येति। ननु विषयस्यैव चैतन्यसम्बन्धित्वस्वभावः तथाच विषयनाशे तत्सम्बन्ध-ध्वंसो मोक्षः स्यादित्यत आह घटादेरिति, दृष्टादृष्टविभागानुपपत्तिश्चेति इदमिदानीं दृष्टं न तदानीं इति व्यवहारानुपपत्तिरित्यर्थः। व्यासङ्गानुपपत्तिरिति इन्द्रियाणां स्व-स्व-विषयसम्बन्धे युगपत् स्व स्वकार्य्यानुत्पादो व्यासङ्गः तदनुपपत्तिः चाक्षुष-स्पार्शनादीनां

प्रागुक्तभावाष्टकयोगि स्वीकार्य्यं। तस्य ज्ञानरूपपरिणामेन सम्बद्धो-विषयः पुरुषस्य स्वरूपतिरोधायकः, एवञ्च बुद्धितत्त्वनाशादेव विषयावच्छेदाभावात् पुंसोमोक्षः। भेदाग्रहाच्च चेतनोऽहं करोमीत्य-भिमानः। तदुक्तं "प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्वशः। अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते" इति। सा च बुद्धिरंश-त्रयवती, पुरुषोपरागः विषयोपरागः व्यापारावेशश्चेति, ममेदं कर्त्तव्य-मित्यत्र ममेति चेतनोपरागः बुद्धि-चेतनयोर्भेदाग्रहात् अतात्त्विकः, इदमिति विषयोपरागः, तदुभयायत्तोव्यापारावेशः। बुद्धावारोपित-चैतन्यस्य विषयेण सम्बन्धः ज्ञानं, ज्ञानेन सम्बन्धचेतनोऽहङ्करोमी-त्युपलब्धिरित्याहुः। अत्राह,—

---

यौगपद्यप्रसङ्ग इति फलितार्थः, तथाच चैतन्यावच्छिन्नत्वं उपाधिभेदेन स्वीकार्य्यमिति भावः। अहङ्कारस्वीकारे युक्तिमाह, स्वप्रदशायामिति, स्वप्नदशायां नियतविषयाभि-माननिर्वाहाय मनोभिन्नाहङ्कारः अवश्यं स्वीकार्य्यः अन्यथा अनियतविषयाभिमाना-पत्तेः, तथाचाहङ्कारस्वीकारे तद्विषयकाहङ्कारस्तद्विषयक एवाभिमान इति नियतविषया-भिमाननिर्वाहः। नियतविषयाभिमानीति नियतः नियमितः विषयः आत्म-देहादिः यस्य सोऽभिमानी व्यापारी यस्य तादृशाहङ्कार इत्यर्थः। बुद्धितत्त्वं साधयति जाग्रदि-त्यादि, सव्यापारं श्वासाद्यनुकूलक्षतिमत्, तथाच जाग्रदवस्थावैलक्षण्येऽपि अवि-च्छिन्नश्वासादिकार्य्यदर्शनात् एकजातीयकार्य्ये एकजातीयकारणस्यावश्यमभ्युपेयत्वेन बुद्धितत्त्वमवश्यं स्वीकार्य्यं अन्यथा सुषुप्तिदशायाम् अहङ्कारपर्य्यन्तव्यापारविरमेन तत्तत्-कार्य्यानुपपत्तिरिति भावः। तस्य ज्ञानरूपपरिणामेनेत्यादि, अयं भावः बुद्धितत्त्वस्य इन्द्रियप्रणालिकया तत्परिणामविशेषं घट इत्यादिज्ञानेन सम्बन्धो घटादिविषयः स्वाकार-ज्ञानपरिणामिबुद्ध्यवच्छिन्नतादृशसंसर्गमात्मसम्बन्धं न पुरुषनिष्ठः पुरुषस्वरूपतिरोधानेन पुरुषस्य संसारसम्पादकः बुद्धितत्त्वनाशे तु तत्परिणामस्यापि घट इत्यादि[illegible]भावात् विषया-वच्छेदकाभावेन चैतन्यावस्थानरूपो मोक्षः, दुःखसम्बन्ध तद्ध्वंसरूपौ संसार मोक्षौ तु न पुंसः किन्तु बुद्धेरेवेति। पुरुषस्य कर्त्तृत्वाभावे आगमवचनमप्याह दर्शयति, प्रकृतेरिति प्रकृतिर्माया तस्या गुणैः सत्त्वरजस्तमोरूपैः क्रियमाणानि कर्माणि भवन्ति, अहङ्कारः

कर्त्तृधर्म्मा नियन्तारश्चेतिता च स एव नः ।
अन्यथाऽनपवर्गः स्यादसंसारोऽथ वा ध्रुवः ॥ १४ ॥

ज्ञप्तिसमानाधिकरणास्तावद्धर्म्माधर्म्म-द्वेषेच्छाः भोगस्य ज्ञप्तिसामानाधिकरण्यात्। एवञ्चेतिता चेतनः स एव ज्ञप्तिमानेव नोऽस्माकं मतः चेतनोऽहं करोमीतिप्रत्ययबलात्। दूषणान्तरमाहान्यथेति। यदि बुद्धिर्नित्या तदा बुद्ध्युपहितात्मनः सर्वदावस्थानात् अनिर्मोक्षः स्यात्, यद्यनित्या तदोत्पन्ना वाच्या, अनित्यभावस्यानुत्पत्त्यभावात्, तत्र च तदुत्पत्तेः प्राक् तदाश्रितधर्म्मादेरप्यभावेन बुद्धितत्त्वस्यानुत्पत्तौ नियतशरीरेन्द्रियादिकार्य्यस्यानुत्पत्तौ असंसारः स्यादित्यर्थः ॥ १४ ॥

चार्वाकस्तु भवतु चेतनधर्म्मोऽदृष्टं चेतनश्च न नित्यविभुः किन्तु कायाकारपरिणतभूतविशेषः गौरोऽहं जानामीति प्रतीत्या रूपवत्त्वसिद्धेरित्यत आह,—

---

अहमितिप्रत्ययः तेन निमूढः आत्मा अन्तःकरणं यस्य तथाविधः पुरुषः कर्त्ताहमिति मन्यते इत्यर्थः। बुद्धित उपलब्धेर्भेदप्रदर्शनार्थं बुद्धेरुभयं दर्शयति, सा चेति, उपरागः सम्बन्धः, समेदमित्यादि, चेतनोपरागः पुरुषसम्बन्धः, स च दर्पणगतमुखप्रतिबिम्बवत् बुद्धिगतचैतन्यप्रतिबिम्बरूपत्वादतात्त्विकः, विषयोपरागः विषयाकारेण बुद्धितत्त्वस्य परिणामः, स च निःश्वासाभिहतदर्पणमलिनिमेव तात्त्विकः। तदुभयायत्तः पुरुषोपराग-विषयोपरागाधीनः, व्यापारावेशः कर्त्तव्यस्य घटादेरवभासः तेन कर्त्तव्यमित्यध्यवसायो व्यापारावेश इत्यर्थः। ज्ञानेन सम्बन्ध इति ज्ञानेन अयं घट इति ज्ञानेन, सम्बन्धः चैतन्यस्यातात्त्विकः सम्बन्धः चेतनोऽहं करोमि इत्याद्युपचारव्यपदेशः। नियन्तारः प्रयोजकाः, बुद्धितत्त्वस्यानुत्पत्ताविति जन्यमात्रं प्रति अदृष्टस्य हेतुत्वादिति भावः ॥ १४ ॥

देहात्मवादिनश्चार्वाकस्य मतमुत्थाप्य निरस्यति, चार्वाकस्त्वित्यादि, ननु घटादेरपि चैतन्यवत्त्वं स्यात् भूतत्वाविशेषात् आह, कायाकारेति तथाच कायाकारपरिणतभूत-

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात्।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥ १५ ॥

शरीरस्य चैतन्ये बाल्यदशायामनुभूतस्य यौवने स्मरणं न स्यात्, चैत्रदृष्टस्य मैत्रेणास्मरणमिव। न च बाल्य-यौवनयोरेकं शरीरम्, अपक्रमात् पूर्वशरीरविनाशात् परिमाणभेदेन द्रव्यभेदात् पूर्वपरिमाणनाशस्याश्रयनाशहेतुकत्वात्। न च कारणेनानुभूतस्य कार्य्येण स्मरणं स्यादिति वाच्यं। वासनासंक्रमाभावात्, अन्यथा मात्रानुभूतस्य गर्भस्थेन स्मरणापत्तेः। ननूपादानवासनाया उपादेये संक्रमः स्यादित्यत आह, न च गत्यन्तरं स्थिर इति, स्थिरे स्थिरपक्षे पुद्गलात् पुद्गलान्तरोत्पत्तेरभावात् करादि शरीरस्योपादानं वाच्यं, तथाच विच्छिन्ने करादौ तदनुभूतस्य स्मरणं न स्यात्, खण्डशरीरे विच्छिन्नकरादेरनुपादानत्वात्। न च परमाणूनां चैतन्यं तेषाञ्च स्थिरत्वात् स्मरणं स्यादिति वाच्यम्। तथा सति स्मरणस्यातीन्द्रियत्वप्रसङ्गात्

---

विशेषस्यैव चैतन्यवत्त्वं न तु भूतसामान्यस्येति भावः। रूपवत्त्वसिद्धेरिति चैतन्ये इत्यादिः। पूर्वशरीरविनाशादिति तथाच पूर्वशरीरनाशं विना शरीरान्तरोत्पत्तिर्न सम्भवति द्रव्योत्पत्तौ द्रव्यस्य प्रतिबन्धकत्वात् इति भावः। ननु पूर्वशरीरमेवोपचयेन वर्द्धितं न तु शरीरान्तरं तदेवेदं शरीरमिति प्रत्यभिज्ञानादित्यत आह, परिमाणभेदेन द्रव्यभेदादिति, तथाच साजात्यमवलम्ब्यैव प्रत्यभिज्ञानमिति भावः। ननु परिमाणभेद एव कथं द्रव्यभेदकः एकस्मिन्नेव द्रव्ये एकपरिमाणनाशानन्तरमपरपरिमाणोत्पत्तिसम्भवादित्यत आह, पूर्वपरिमाणनाशस्येति। ननु यौवनशरीरजनके बाल्ये एव संस्कारः स्वीकार्यः तथाच कारणनिष्ठसंस्कारस्यैव कार्यनिष्ठस्मृतिजनकत्वमित्याह, न चेति। वासनासंक्रमाभावात् वासना संस्कारः, संक्रमः सामानाधिकरण्यं, तथाच समानाधिकरणयोरेव संस्कारस्मरणयोर्हेतु-हेतुमद्भावेन कारणनिष्ठसंस्कारस्य कार्यनिष्ठस्मृतिजनकत्वं न सम्भवतीति भावः। अन्यथा विभिन्नाधिकरणयोः संस्कार-स्मरणयोः हेतु-हेतुमद्भावे इत्यर्थः, उपादेये संक्रमः इति तथाच पुत्रस्य उपादानकारणं न माता तस्याः निमित्तकारणत्वात् इति

तत्तिष्ठद्रूपादिवत्, करपरमाण्वनुभूतस्य विच्छिन्नकरपरमाणुसन्नि-
धानेऽस्मरणप्रसङ्गाच्च ॥ १५ ॥

नन्वस्तु क्षणभङ्गः तथाच पूर्वपूर्वपरमाणुपुञ्जेनोपादेयोत्तरोत्तर-
परमाणुपुञ्ज इति न स्मरणानुपपत्तिरित्यत आह।

न वैजात्यं विना तत् स्यात् न तस्मिन्ननुमा भवेत्।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥ १६ ॥

वैजात्यं कुर्वद्रूपत्वं विना न तत् क्षणिकत्वं स्यात् सिद्ध्यतीत्यर्थः। स्थिर एव बीजादौ सहकारिलाभालाभाभ्यामेव कार्यजन्माजन्मनोरुपपत्तेः बीजत्वादिनैवाङ्कुरादिजनकतोपपत्तेः, बीजव्यक्तिभेदाभावे कुतः क्षणिकत्वं स्यात्। तस्मिन् जातिविशेषे च ऐन्द्रियकवृत्तावतीन्द्रियत्वेनाभ्युपगम्यमाने सत्यनुमानं न स्यात्, धूमकुर्वद्रूप-

---

भावः। स्थिरपक्ष इति पुत्रोत्पत्तेरभावादिति' पुत्रोत्पत्तेरस्वीकारादित्यर्थः, तथाच क्षणिकत्वपक्षे बाल्य-यौवनशरीरयोः परमाणुपुञ्जात्मकतया उपादानोपादेयभावेन वासनासंक्रमणसम्भवेऽपि स्थिरपक्षे तदभावान्न संक्रमः सम्भवतीति भावः ॥ १५ ॥

क्षणभङ्गवादिबौद्धमतमुत्थाप्य निरस्यति, नन्वस्त्वित्यादिना, क्षणभङ्गः भावमात्रस्य स्वोत्पत्त्यव्यवहितोत्तरकालवृत्तिध्वंसप्रतियोगित्वं, यत् सत् तत्क्षणिकम् इति बौद्धानां सिद्धान्तात्। एतन्मते परमाणुपुञ्जेभ्योऽतिरिक्तोऽवयवी न सम्भवति अवयव्युत्पत्तिकाले पूर्वपरमाणुपुञ्जानां विनाशात् अतः पुञ्जात् पुञ्जान्तरोत्पत्तिरित्ययमेव तेषां सिद्धान्तः, तथाच पूर्वोत्तरशरीरयोरुपादानोपादेयभावेन वासनासंक्रमसम्भवात् न स्मरणानुपपत्तिः। क्षणिकत्वे विप्रतिपत्तिः सत् स्वोत्पत्त्यव्यवहितोत्तरकालवृत्तिध्वंसप्रतियोगि न वा इत्येवंरूपा, अत्र भावकोटिः बौद्धानां निषेधकोटिः नैयायिकानाम्। वैजात्यं कुर्वद्रूपत्वं विनेति, कुर्वद्रूपत्वं जातिविशेषः, अयमत्र भावः बीजत्वेन यदि बीजानाम् अङ्कुरकारणत्वं तर्हि कुशूलस्थबीजादपि अङ्कुरोत्पत्त्यापत्तिः अतः बीजानाम् अङ्कुरकारणतावच्छेदकं कुर्वद्रूपत्वम् अवश्यमभ्युपेयं, तत्स्वीकारेऽपि यदि बीजानां स्थिरत्वं तदा कुशूलस्थबीजेऽपि कुर्वद्रूपत्वसत्त्वात् तदानीमप्यङ्कुरं स्यात् अतः क्षणिकत्वसिद्धिः, तथा-

वह्नित्वादिनैव वह्न्यादेर्हेतुतया विलक्षणस्य कार्य्यजनकत्वेन सम्भावितस्य विजातीयधूमस्यैव वह्निजन्यत्वसम्भावनायां धूमसामान्ये हेतुत्वानिर्णयात्, तथाच कार्य्य-कारणभावरूपविपक्षबाधकतर्काधीनव्याप्तिनिर्णयस्यासम्भवेनानुमानमात्रोच्छेदप्रसङ्ग इति। तेनानुमानेन विना च क्षणिकत्वस्यासिद्धिः तस्यानुमानैकगम्यत्वात्। न च तत्र प्रत्यक्षमेव मानमिति वाच्यम्। निर्विकल्पकस्यैव तन्मते विषयजन्यतया प्रामाण्यं, तस्य च सविकल्पकोन्नेयतया क्षणिका इति सविकल्पकस्यासिद्धावसिद्धेः। किञ्चाङ्कुरकुर्वद्रूपत्वं न जातिः शालित्वादिना सङ्करात् शालित्वमपहाय यवे तस्य सत्त्वात् शालित्वस्य कुशूलस्थे शालौ तदपहाय सत्त्वात् कुर्वद्रूपे शालौ तूभयोः समा-

---

त्वायं प्रयोगः बीजादिकं क्षणिकं कुर्वद्रूपत्वादिति। एतन्मतं निरस्यति, स्थिर एवेत्यादिना, कुतः क्षणिकत्वं स्यादिति तथाच कुर्वद्रूपत्वहेतुना क्षणिकत्वानुमानं, कुर्वद्रूपत्वासिद्धौ न क्षणिकत्वसिद्धिरिति भावः। ऐन्द्रियकत्वमिति इन्द्रियजन्यप्रत्यक्षगोचरत्वमित्यर्थः, अतीन्द्रियत्वेनाप्यनुपगम्यमान इति एतेन धूमसामान्ये वह्निसामान्यस्य हेतुत्वेऽपि अग्रिमकुर्वद्रूपत्वावच्छिन्ने धूमकुर्वद्रूपत्वावच्छिन्नं प्रति हेतुत्वनिर्णयात् तादृशकार्य्य कारणभावपक्षमूलकतर्काधीनव्याप्तिनिश्चयसम्भवेन धूमसामान्यलिङ्गकवह्निसामान्यानुमानस्यासिद्धावपि अग्रिमकुर्वद्रूपत्वविशिष्टधूमलिङ्गकधूमकुर्वद्रूपत्वविशिष्टवह्न्यनुमानं कथं न सम्भवति इति पूर्वपक्षोऽपि निरस्तः, कुर्वद्रूपत्वस्यातीन्द्रियत्वेन तेन रूपेण प्रत्यक्षतो व्याप्तिनिश्चयासम्भवात्। न हि बीजादौ कुर्वद्रूपत्वं प्रत्यक्षत्वं, बीजादौ कुर्वद्रूपत्वस्य चतुरोत्पादानुमेयत्वात्। उपस्थितं कारणगतरूपं परित्यज्यानुपलभ्यमानरूपान्तरेण कारणत्वे कार्य्येऽप्युपस्थितरूपत्यागेनानुपलभ्यमानरूपान्तरेण कार्य्यत्वं तथा च कार्य्य-कारणभावप्रयोजकतर्काधीनव्याप्तिनिश्चयो न सम्भवतीति परिहारार्थमाह, धूमकुर्वद्रूपत्वादिना। विलक्षणस्य कार्य्यजनकत्वेन अग्रिमरूपस्य कार्य्यजनकत्वेनेत्यर्थः, सम्भावितस्य प्रतीतस्य, विजातीयधूमस्यैव अग्रिमकुर्वद्रूपधूमस्येत्यर्थः, वह्निजन्यत्वसम्भावनायां धूमकुर्वद्रूपवह्निजन्यत्वसिद्धौ, हेतुत्वानिर्णयादिति, एतेन अप्रत्यक्षगुणवतोर्निश्चयासत्त्वं सूचितम्। विपक्षबाधकतर्काधीनेति विपक्षस्य विपक्षवृत्तित्वरूपव्यभिचारस्य, बाधकः आपाद्याभावेन

वैशद्यादिति। अतएव रजतत्वादिव्याप्यं नानैव घटत्वं, विजातीयसंस्थानवदवयवकत्वरूपमुपाधिमादाय घट इत्यनुगतधीरिति ॥१६॥

नन्वस्तु क्षणिकत्वे सन्देहः, न च प्रत्यभिज्ञाबलेन स्थैर्य्यसिद्धौ कथं स इति वाच्यं, स एवायं घट इत्यत्र सन्देहसत्त्वात् अत आह,—

स्थैर्य्य-दृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः।
एकतानिर्णयो येन क्षणे तेन स्थिरे मतः ॥ १७ ॥

स्थैर्य्ये न सन्देहस्तस्य प्रत्यभिज्ञया विषयीकरणात्। न च प्रत्यभिज्ञानरूपे, तस्यापि तदनुव्यवसायेन निर्णयात्, प्रामाण्य-

---

आपादकाभावनिर्णायकः यः तर्कः धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यात् इत्येवंरूपः तदधीनेत्यर्थः। ननु प्रत्यक्षादेव क्षणिकत्वसिद्धिरित्यत आह, बाध्यक्षमिति अध्यक्षं निर्विकल्पकं, निश्चयः सविकल्पकं, क्षणिकत्वनिश्चयाभावान्न तदनुमेयं क्षणिकत्वनिर्विकल्पकमित्यर्थः, धूंढ़कमेव तात्पर्यार्थं वर्णयति, न च तथेत्यादिना, निर्विकल्पकस्यैवेत्यादि, बौद्धमते विषयजन्यं प्रत्यक्षं प्रमाणं तच्च निर्विकल्पकमेव, घटादेः क्षणिकतया घटाद्युत्पत्तिद्वितीयक्षणजातस्य घटादिसविकल्पकस्य घटादिविषयजन्यत्वं न सम्भवति कार्य्यनियतपूर्ववर्त्तिन एव कारणत्वात्। न च प्रत्यक्षं प्रति विषयस्य कार्य्यसहभावेन कारणत्वात् निर्विकल्पकं प्रत्यपि कथं विषयस्य कारणत्वनिर्वाहः निर्विकल्पकोत्पत्तिक्षणे विषयाभावात् इति वाच्यम्। एतन्मते सर्वत्र नियतपूर्ववर्त्तित्वस्यैव कारणत्वरूपत्वात्। तथाच निर्विकल्पकस्य निश्चयापरपर्य्यायसविकल्पकोन्नेयतया निश्चयरूपक्षणिकत्वसविकल्पकासिद्धा क्षणिकत्वनिर्विकल्पकासिद्धिरिति भावः। अतएव मकरन्दग्रन्थे कथितमितो "बौद्धमते निर्विकल्पकमेव प्रमाणं न तु निश्चयापरनामधेयं सविकल्पकं तच्च निर्विकल्पकं सविकल्पकोन्नेयमिति सिद्धान्तः", प्रकृते च क्षणिकत्वनिश्चयाभावात् तदुन्नेयं क्षणिकत्वनिर्विकल्पकमप्यसम्भवीति भाव इति ॥ १६ ॥

क्षणिकत्वसन्देहेऽपि स्थैर्य्यासिद्धा चार्वाकाभिलषितसिद्धिरिति ग्रहते नन्वित्यादिना, अत्र सन्देहः स्थैर्य्ये, प्रत्यभिज्ञायां, प्रामाण्यमात्रे, प्रत्यभिज्ञानप्रामाण्ये वा, नाद्य इत्याह, दृष्टी स्थैर्य्येति स्थैर्य्ये क्षणिकत्वाभावे न सन्देह इत्यर्थः, अत्र हेतुमाह टीकायां तस्य-

भावेऽपि न सन्देहः विरोधात् सन्देहज्ञानस्य प्रामाण्यसन्देहे सन्देहस्याप्यसिद्धेः, प्रामाण्यस्यासिद्धौ प्रामाण्यसंशयस्याप्यभावः कोट्यनिर्णयात्। ननु प्रत्यभिज्ञायाः प्रामाण्ये संशयः लूनपुनर्जात-केशादौ त एवामी केशा इत्यादेर्भ्रमत्वदर्शनात् तत्राह एकतेति। येन प्रमाणेन विरुद्धधर्मसंसर्गविरहेण क्षणिके घटे यदि तस्मिन्नेव क्षणे न नानात्वं किन्त्वभेदः, तदा स्थिरे स्थिरपक्षेऽपि नाना-क्षणवर्त्तित्वेऽपि घटस्य न नानात्वं किन्त्वेकत्वम्, एकस्य ज्ञानस्य नानाविषयसम्बन्धवत् एकस्य नानाकालसम्बन्धेऽपि अविरोधात्, तत्तत्कारणक्रमाधीनत्वात् तत्तत्कालसम्बन्धस्य॥ १७॥

तदेवं परलोकसाधनमागतम्। तत्रेदं प्रष्टव्यं कारणत्वं स्वाभाविकमौपाधिकं वा, आद्ये नीलस्य सर्वान् प्रति नीलत्ववत् कारणस्य सर्वान् प्रत्यविशेषात् कारणत्वमपि स्यात्, तथाच सर्वं

---

त्यादि तस्य स्थैर्यस्य प्रत्यभिज्ञया स एवायं घट इति प्रत्यभिज्ञया विषयीकरणादित्यर्थः। न द्वितीय इत्याह, मूर्खे हस्तैरिति दृष्टौ प्रत्यभिज्ञायां न सन्देह इत्यर्थः, अत एवाह, टीकायां तस्यापि तदनुव्यवसायेनेति तस्य प्रत्यभिज्ञानस्य प्रत्यभिजानामीत्यनुव्यवसायेन निश्चयादित्यर्थः। न तृतीयः इत्याह, न प्रामाण्य इति न प्रामाण्ये संशय इत्यर्थः, अत एवाह, विरोधत इति, विरोधमेवदर्शयति, टीकायां तथाहीत्यादिना। सन्देहज्ञानेऽपि सन्दिग्धीत्यनुव्यवसायस्येत्यर्थः। न चतुर्थं इत्याह, एकतेत्यादि, व्याख्यायां येन प्रमाणेनेति बाधकप्रमाणविरहितेन प्रत्यभिज्ञादिरूपेणेत्यर्थः, विरुद्धधर्मसंसर्गविरहेण तत्तद्धर्माणां विरुद्धताविरहेण, न नानात्वमिति, अन्यथा क्षणिकत्वपक्षेऽपि देशभिन्नसत्त्वक्षणभिन्नत्वादिधर्माणां विरोधाशङ्कया नानात्वं स्यादिति भावः। अभेदः एकत्वम्, अविरोधादिति तथाच यत्र प्रत्यभिज्ञाया बाधकनिश्चयस्तदैव तस्या भ्रमत्वम्, एवं येषां धर्माणां विरोधः प्रमाणसिद्धः तेषामेव धर्मिभेदकत्वं न तु सर्वेषामिति भावः। नन्वेकज्ञानस्य युगपन्नानाविषयसम्बन्धवत् एकस्य युगपत् नानाकालसम्बन्धः स्यादित्यत आह, तत्तत्कारणक्रमेति तथाच तत्तत्कालसम्बन्धे तत्तत्कालस्यापि हेतुत्वात् तत्तत्कालस्य क्रमिकत्वेन तत्तत्कालसम्बन्धस्यापि क्रमिकत्वं न यौगपद्यमिति भावः॥ १७॥

कारणं सर्वस्य स्यात्। द्वितीये उपाधेरपि स्वाभाविकत्वे तद्दोष-तादवस्थ्यात्, औपाधिकत्वेऽनवस्था। किञ्च कारणत्वस्य स्वाभाविकत्वे उत्पत्तेरारभ्य कार्य्यं स्यात्, तत्राह,—

हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तुसत्।
तद्युक्तं तच तच्छक्तमिति साधारणं न किम्॥ १८॥

हेतुशक्तिः कारणत्वं, अनादृत्य अनिश्चित्य, नीलाद्यपि न वस्तुसत् न प्रामाणिकं, तथाच यत् पारमार्थिकं तत् साधारणं यथा नीलादि, कारणत्वञ्च यदि न साधारणम् अतो न परमार्थसदित्यपि न स्यात् दृष्टान्तस्यानित्यस्य नीलस्य कारणत्वस्वीकारेण सर्वत्राभावात् नित्यस्य नीलादेः प्रमाणागोचरत्वात्। किञ्चेत्याद्युक्तं दूषयति, तद्युक्तमिति तद्युक्तं सहकारियुक्तं, तत् कारणं, तत्र कार्य्ये शक्तमिति

---

तदेवमित्यादि, परलोकसाधनमिति स्वर्गादिसाधनमदृष्टमित्यर्थः। स्वाभाविकं धर्मिणो नीलत्वादिवत् स्वस्मिन् नियतम् स्थितं न तु किञ्चिदपेक्ष्य, औपाधिकं किञ्चिदपेक्ष्य, नीलस्य सर्वान् प्रतीत्यादि यथा यत् नीलं तत् सर्वान् प्रति नीलं तथा यत् कारणं तत् सर्वान् प्रति कारणं स्यादित्यर्थः, सर्वस्य स्यादिति तथाच कारणत्वस्यासाधारणत्वं यन्नम-मिति न कारणत्वं पारमार्थिकं नीलादेरिव साधारणत्वेन तत्स्यादिति भावः। कारण-त्वस्य स्वाभाविकत्वे दोषान्तरमाह, किञ्चेति, उत्पत्तेरारभ्येति स्थिरस्य एकस्वभावत्वनियमात् बीजस्य बीजत्वमिव अङ्कुरकारित्वमप्युत्पत्तित एव स्यादित्यर्थः। नीलाद्यपि न वस्तुसदिति, यदि नीलाद्युत्पत्तौ कारणस्यापेक्षा तदा कारणस्य प्रामाणिकत्वमवश्यमङ्गीकार्यं कार-णस्याप्रामाणिकत्वे कार्य्यस्याप्यप्रामाणिकत्वापत्तेः, तथाचेति यत् पारमार्थिकं तत्साधा-रणम् प्रति व्याप्त्या प्रथमं साधारणत्वे पारमार्थिकत्वव्यापकत्वनियमः, उत्तरकाले कारणत्वञ्च यदि न साधारणम् इत्यादिरीत्या व्यापकाभावेन व्याप्याभावानुमानम् दृष्टा-न्तानुमानं बौद्धसम्मतम् एतद्दूषयति, इत्यपि न स्यादिति एतदनुमानं न समीचीनं स्यादित्यर्थः, अत्र हेतुमाह, दृष्टान्तस्येति, कारणं विना अभावादिति कारणं विना अनुत्पादादित्यर्थः, तथाच यो यत्सादेशो भवति स तत्सधर्मा भवति इति नियमात्

नोत्पत्तेरारभ्य कारणत्वम्। कारणत्वस्य साधारण्ये चेष्टापत्तिमाह, इति साधारणं न किमिति, नीलादेरपि सर्वसाधारण्यं यत् सर्वैस्तथा नीलत्वादिना व्यवह्रियमाणत्वं, तादृशञ्च साधारण्यं सहकारियुक्तस्य जनकत्वमित्यस्यापि, तथा व्यवहारस्य सर्वसिद्धत्वात्॥१८॥

नन्वात्मनिष्ठमदृष्टं नात्मजन्यं नित्यविभोस्तस्य कालतो देशतश्च व्यतिरेकाभावात् व्यतिरेकसहकृतान्वयस्यैव कारणताग्राहकत्वात्, तद्व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वस्यैव कारणतात्मकत्वाच्च, तथाच समवायिकारणाभावे असमवायिकारण-निमित्ताभ्यामपि न कार्य्यं जननीयं तत्प्रत्यासन्नाभ्यामेव ताभ्यां जननादित्यदृष्टस्य नित्यत्वापत्तिः, तथाच न प्रतिनियतात्मदेशकालीनभोगजनकत्वं कल्पेरत इत्यत आह,—

---

नीलस्य कारणसापेक्षत्वेन कारणसधर्मत्वात् तद्वैधर्म्यदृष्टान्तेन कारणत्वस्यापारमार्थिकत्वं न सिध्यतीति भावः। ननु अनित्यनीलादेः सापेक्षत्वेऽपि नित्यनीलदृष्टान्तेन कारणत्वस्यापारमार्थिकत्वं सिध्यतीत्यत आह, नित्यस्येति क्षणभङ्गवादिमते नित्यवस्तुनोऽप्रामाणिकत्वादित्यर्थः। सर्वान् प्रतीत्यस्य सर्ववृत्तित्वरूपार्थो न सम्भवति नीलत्वस्य पीतवृत्तित्वाभावात्, यदि सर्वैर्व्यवह्रियमाणत्वम् अर्थः तदा तादृशं सर्वसाधारणत्वं कारणत्वस्यापीष्टमित्याह, इष्टापत्तिमाहेत्यादि। इति साधारणं न किम् इति मूलस्य एवम्भूतं सर्वसाधारणत्वं 'किं' कथं 'न' नाङ्गीक्रियते अपि तु अङ्गीक्रियत एवेत्यर्थः॥ १८॥

कार्यसिद्धावपि नित्यविभोर्न कारणत्वमुपपद्यते इति शङ्कते, नन्वित्यादिना, नित्यविभोरिति हेतुगर्भविशेषणम्, आत्मनः कालतो व्यतिरेकाभावे हेतुर्नित्यत्वं, देशतो व्यतिरेकाभावे च हेतुर्विभुत्वम्, एतच्च वादिनिरासाय आपाततः उक्तं, वस्तुतस्तु कारणत्वस्य व्यतिरेकधर्मत्वेऽपि तादृशधर्मो न यत्र कारणत्वं तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव तन्निष्ठकारणताघटकः यथाच समवायसम्बन्धेन कार्य्यं प्रति तादात्म्यसम्बन्धेन समवायिकारणस्य हेतुत्वात् समवायिकारणनिष्ठकारणत्वं तादृशसम्बन्धावच्छिन्नाभावगर्भं, तादृशोऽभावः अन्योन्याभाव एव स चात्मनोऽपि प्रसिद्ध एवेति ध्येयम्, एतच्चार्थं अनुपदविवरणादिना स्फुटीभविष्यति। प्रतिनियतेति नियमेन सर्वेषु कालेषु सर्वेषाम्

पूर्वभावो हि हेतुत्वं मीयते येन केनचित्।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि॥१९॥

व्यतिरेकगर्भं न कारणत्वं किन्त्वनन्यथासिद्धनियतपूर्ववर्त्तिभावः। हि हेतौ, यतो ग्राहको न व्यतिरेकः धर्मिग्राहकमानेनापि तस्य प्रमापणात् इत्यतो मीयते येन केनचित् व्यापकस्य नित्यस्यात्मनः येन केनचित् प्रमीयते, अन्यथा धर्मिधीरेव न स्यात्, तथाच धर्मिग्राहकप्रमाणसिद्धं तस्य हेतुत्वं, घटादिकं प्रति कपालादेरन्वयव्यतिरेकदर्शनात् समवेतकार्य्यं प्रति द्रव्यस्य द्रव्यत्वेन कारणत्वस्य कल्पनात्, पृथिव्यादिबाधे परिशेषेण ज्ञानेच्छादौ पृथिव्यादिभिन्नसमवायिनः सिद्धिः। वस्तुतस्तु समवायिकारणताघटकोऽन्योन्याभावः, यत्र कपालं तत्र घटवदितिवत् यो न आत्मा न तत्र ज्ञानादि इतिधीसम्भवात्। एवं यो न कालस्तत्र सम्बन्ध-

---

आत्मनाम् घटकत्वमिति भावः। पूर्वभावोऽहीति हि यतः पूर्ववर्त्तित्वं हेतुत्वम्, अतः नित्यस्य कालतः व्यतिरेकाप्रतियोगिनः, व्यापकस्यापि देशतो व्यतिरेकाप्रतियोगिनोऽपि, आत्मनः तद्धेतुत्वं येन केनचित् प्रमाणेन धर्मिग्राहकप्रमाणेन मीयते निर्णीतं ज्ञायते, अन्यथा हेतुत्वाभावे न धर्मिधीः स्यादिति शेषः, इति कारिकार्थः। व्याख्यायां ग्राहको न व्यतिरेक इति तथाचान्वय-व्यतिरेकघटस्य न कारणताघटकसामान्यं प्रति हेतुत्वमिति भावः। धर्मिग्राहकप्रमाणसिद्धमिति, प्रमाणञ्च ज्ञानेच्छादिकं समवायिकारणजन्यं समवेतकार्य्यत्वादित्येवंरूपम्, ईदृशप्रमाणेन इतरबाधसहकारात् आत्मनः ज्ञानादिसमवायिकारणत्वसिद्धिः। न च ज्ञानादिकं क्वचित्समवेतं गुणत्वात् संयोगवत् इत्यनुमानेन इतरबाधसहकारात् आत्मनः सिद्धौ कथं हेतुत्वस्य धर्मिग्राहकमानसिद्धत्वमिति वाच्यम्। जन्यज्ञानादेः आत्मसमवेतत्वे सिद्धे यत् जन्यं सत् यत्समवेतं भवति तत् तत्समवायिकारणकं भवति इति सामान्यतोव्याप्त्या आत्मसमवायिकारणत्वसिद्धेः साक्षात् परम्परया वा हेतुत्वस्य धर्मिग्राहकमानसिद्धत्वात्। घटादिकं प्रतीति तथाच अन्वय-व्यतिरेकाभ्यां घटादिकं प्रति कपालादेः समवायिकारणत्वे सिद्धे यद्विशेषयोरिति

विशेषेण न घट इति निमित्तकारणस्याधिकरणीभूतस्य कारणताप्यन्योन्याभावरूपव्यतिरेकेण ग्राह्या। एवञ्च माया-प्रकृत्य-विद्यादिपदमप्येतत्परमिति न "मायिकं जगत्" इत्यादिश्रुतिविरोधः, तथाचादृष्टाधिष्ठातृतया ईश्वरसिद्धिः ॥ १९ ॥

स्तवकार्थसंग्राहकश्लोकमाह।

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो-
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम॥२०॥

इति प्रथमः स्तवकः।

इति स्तवकसमाप्तौ, यस्येशस्य सहकारिशक्तिः कारणं, एषा सहकारिरूपा माया, असमत्वं सर्वकार्य्यापेक्षणीयत्वात्, दुरुन्नेयत्वात् मादृश्यान्मायापदेऽदृष्टे लक्षणा, मूलत्वात् प्रकृतिः सैव, तत्त्वज्ञानप्रतिबध्यत्वात् सैवाविद्या, उदिता उक्ता, असौ देवो मम मनसि

---

मायेन सन्निहितकार्यमात्रं प्रति द्रव्यस्य द्रव्यत्वेन हेतुत्वमिद्धिरिति भावः। कारणत्वव्यतिरिक्तसर्भेऽपि नान्यन: कारणत्वव्याघात इत्याह वस्तुतस्त्वित्यादिना। नित्यविभोरात्मनो यथा समवायिकारणत्वं तथा नित्यविभोः कालस्यापि निमित्तकारणत्वम् इत्याह, एवमिति, सम्बन्धविशेषेण, कालिकसम्बन्धेनेत्यर्थः। अदृष्टाधिष्ठातृतया अदृष्टजन्यकार्ये सचेतनसहकारितया, अचेतनं सचेतनाधिष्ठितमेव कार्यजनकम् "इति नियमात्, अत सचेतनाधिष्ठितत्वं सचेतनसहकारित्वपर्य्यवसन्नम् इति ॥ १९ ॥

"तन्मायाप्रभवं विश्वं" "प्रकृतिप्रभवं विश्वम्" इत्यादि बहुतरागमार्थविरोधमाह, इत्येषेति। असमत्वम् असदृशत्वं, सर्वकार्य्यापेक्षणीयत्वादिति, तथाच जन्यमात्रं प्रति अदृष्टस्य हेतुत्वात् सर्वकार्य्यापेक्षणीयत्वमिति भावः। अदृष्टे लक्षणेति, न च लक्षणायाः शक्तिमूलकत्वात् मायापदस्य शक्तिविरहेण कथं मायापदस्य अदृष्टे लक्षणा

स्तद्विपर्ययो साक्षादभिरतिं साक्षात्कारि ज्ञानं, बलात्तु जनयतु, साक्षितया साक्षीभूय, निर्णायकतया साक्षित्वं, शान्तः रागादिगुणशून्यः, प्रपञ्चस्य मिथ्याज्ञानादेः कल्लोलः मिथ्याज्ञानपरम्परा, तस्याः कोलाहलः किंवदन्ती सा विरता यस्मादिति ॥ २० ॥

इति प्रथमस्तवकव्याख्यानम् ।

---

## द्वितीयः स्तवकः ।

अन्यथापि परलोकसाधनानुष्ठानसम्भवादिति द्वितीयविप्रतिपत्तिः। अन्यथा ईश्वरं विनापि परलोकसाधनं यागाद्यनुष्ठानं सम्भवति यागादेः स्वर्गसाधनत्वस्य वेदगम्यत्वात्, नित्यनिर्दोषतया च वेदस्य प्रामाण्यं महाजनपरिग्रहाच्च प्रामाण्यस्य ग्रह इति वेद-

---

इति वाच्यम् । दोषविशेषमुत्पाद्य भ्रमजनकात्मनिष्ठव्यापारविशेषे मायापदस्य शक्तत्वात् । कारिकायां प्रबोधभयत इति प्रबोधात् तत्त्वज्ञानात् भयम् अदृष्टनाशरूपं तस्मादित्यर्थः, एतत्कारिकार्थं विवृणोति तत्त्वज्ञानप्रतिबध्यत्वादिति । अविद्येति विरोधार्थकनञा तत्त्वज्ञानरूपविद्याविरोधिनीत्यर्थः ॥ २० ॥

इति श्रीकामाख्यानाथतर्कवागीशविरचितायां कुसुमाञ्जलिव्याख्याविवृतौ प्रथमस्तवकव्याख्याविवृतिः समाप्ता ।

---

द्वितीयां मीमांसकविप्रतिपत्तिमुत्थापयति, अन्यथापीति, तथाच वेदः पौरुषेयो न वेति विप्रतिपत्तिः, अत्र विधिकोटिर्नैयायिकानां, निषेधकोटिर्मीमांसकानाम् । अथवा यागादौ वेदजन्येष्टसाधनताप्रमा शाब्दान्यवक्तृयथार्थज्ञानपूर्विका न वेत्यादिरूपा विप्रतिपत्तिः, अध्यापकयथार्थज्ञानपूर्वकत्वमादाय सिद्धसाधनवारणाय शाब्दान्येति । नित्यनिर्दोषतयेति नित्यतया निर्दोषतया चेत्यर्थः, निर्दोषत्वं भ्रम-प्रमादाद्यन्यतमदोषवत्-

कारणतया नेश्वरसिद्धिः, योगर्द्धिसम्पादितसार्वज्ञ्यकपिलादिपूर्वक एव वा वेदोऽस्तु इत्यत्राह,—

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात्।
तदन्यस्मिन्ननविश्वासान्न विधान्तरसम्भवः ॥१॥

शाब्दी प्रमा वक्तृयथार्थवाक्यार्थधीरूपगुणजन्या इति गुणाधारतया ईश्वरसिद्धिः। ननु सकर्तृकेऽस्तु यथार्थवाक्यार्थधीर्गुणः अकर्तृके च वेदे निर्दोषत्वमेव प्रामाण्यप्रयोजकमस्तु, महाजनपरिग्रहेण च प्रामाण्यग्रह इत्यत आह सर्गप्रलयसम्भवादिति, प्रलयोत्तरं पूर्ववेदनाशादुत्तरवेदस्य कथं प्रामाण्यं महाजनपरिग्रहस्यापि तदा अभावात्। शब्दस्यानित्यत्वम् उत्पन्नो गकार इति प्रतीतिसिद्धं, प्रवाहाविच्छेदरूपनित्यत्वमपि प्रलयसम्भावान्नास्तीति भावः। कपिलादय एव पूर्वसर्गादौ पूर्वसर्गाभ्यस्तयोगजन्यधर्म्मानुभवात् साक्षात्कृतसकलार्थाः कर्त्तारः सन्तु इत्यत आह तदन्यस्मिन्निति, विश्व-

---

पुरुषाप्रणीतत्वं, तथाच अन्यत्र वाक्ये वक्तृदोषेणाप्रामाण्यशङ्कासम्भवेऽपि नित्यत्वादवक्तृके वेदे तन्मूलशङ्कासम्भावना नास्तीति भावः। ननु वेदस्य ईश्वराप्रणीतत्वे कथं तत्प्रामाण्यग्रहः इत्यत आह, वेदस्येति, तथाच वेदः प्रमाणं महाजनपरिगृहीतत्वादित्यनुमानेन वेदप्रामाण्यग्रह इति भावः। नेश्वरसिद्धिरिति, तथाच वेदो न पौरुषेयः नित्यत्वादित्यनुमानेन वेदः सकर्तृको वाक्यत्वादित्यनुमानस्य बाधात् नेश्वरसिद्धिरिति भावः। वेदस्य वक्तृगुणजन्यत्वपक्षेऽपि अन्यथासिद्धिमाह, योगेति, तथाच सर्वज्ञाः कपिलादय एव वेदकर्त्तारः अदृष्टाधिष्ठातारश्चेति न नित्यसर्वज्ञसिद्धिरिति भावः।* कारिकायां प्रमाया इति, प्रमायाः जन्यप्रमायाः परतन्त्रत्वात् पराधीनत्वादित्यर्थः। व्याख्यायां शाब्दीप्रमेत्यादि, तथाच वेदजन्या शाब्दी प्रमा गुणजन्या प्रमात्वात् चाक्षुषप्रमावदिति सामान्यतोऽनुमानेन इतरबाधसहकारात् वक्तृयथार्थधीरूपगुणजन्यत्वे सिद्धे वेदजन्यशाब्दबोधजनकयथार्थवाक्यार्थज्ञानम् आत्मसमवेतं ज्ञानत्वादित्यनुमानेन इतरबाधसहकारादीश्वरसिद्धिरिति भावः। महाजनपरिग्रहेणेति प्रमाणतया महाजनस्वीकारेणेत्यर्थः। सर्गप्रलय-

त्निर्माणसमर्था अणिमादिशक्तिसम्पन्ना यदि सर्वज्ञास्तदा लाघवादेक एव तादृशः स्वीक्रियतां स एव भगवानीश्वरः, अनित्यासर्वविषयकज्ञानवति च विश्वास एव नास्तीति वैदिकव्यवहारविलोप इति न विधान्तरसम्भवः ईश्वरानङ्गीकर्तृनये इति शेषः ॥ १ ॥

ननु सर्गप्रलयसम्भवादिति न युक्तं प्रलये मानाभावादिति। अहोरात्रस्याहोरात्राव्यवहितपूर्वकत्वनियमात्, कर्मणां विषमविपाकतया कालोपाधित्वस्य भोगव्याप्यत्वात् युगपददृष्टस्य च वृत्तिनिरोधानुपपत्तेः, ब्राह्मणस्य ब्राह्मणजन्यत्वनियमात् सर्गाद्युत्पन्नस्य ब्राह्मणत्वाभावात् उत्तरकालेऽपि ब्राह्मणव्यवहारानुपपत्तेः, प्रयोज्यप्रयोजकयोरभावात् सङ्केतग्रहाभावे शब्दव्यवहारानुपपत्तेः, घटादिनिर्माणे नैपुण्यस्य पूर्वदर्शनसापेक्षस्य सर्गादावभावात् घटादिसम्प्रदायोच्छेदादित्यादेर्बाधकाच्च तत्राह,—

---

सम्भवादिति, तथाच वेदस्य न नित्यत्वमिति वेदकर्तृतयापीश्वरसिद्धिरिति भावः। वेदस्यानित्यत्वे प्रमाणान्तरं दर्शयति, शब्दस्यानित्यत्वमिति, तथाच शब्दस्यानित्यत्वे आनुपूर्वीविशेषविशिष्टस्य सुतरामनित्यत्वमिति भावः। ननु उत्पन्नो गकार इति प्रतीत्या वेदस्य स्वाभाविकनित्यत्वाभावेऽपि प्रवाहाविच्छेदरूपं नित्यत्वं स्यात् अध्यापकाध्येतृपारम्पर्येण कालसामान्यस्य वेदाधिकरणत्वं सम्भवतीत्याशङ्क्याह, प्रवाहाविच्छेदेति, वेदस्य प्रवाहाद्यविच्छेदरूपं नित्यत्वञ्च कालत्वस्य वेदाधिकरणत्वव्याप्यत्वरूपं तच्च न सम्भवतीत्याह, प्रलयसम्भवादिति, तथाच प्रलयस्य अध्यापकाध्येतृसम्बन्धाभावेन वेदाधिकरणत्वासम्भवात् न कालत्वस्य वेदाधिकरणत्वव्याप्यत्वमिति भावः। उपसंहरति, कारिकायां न विधान्तरसम्भव इति न प्रकारान्तरसम्भव इत्यर्थः ॥ १ ॥

प्रलये साधकाभावमाह, मानाभावादिति, बाधकाभावमुक्त्वा क्रमेण बाधकपञ्चकमप्याह, अहोरात्रस्येत्यादिना, अव्यवहिताहोरात्रपूर्वकत्वेति, पूर्वसर्गाहोरात्रपूर्वकत्वेन प्रलयेऽपि साध्यसिद्धेराह, अव्यवहितेति। कर्मणां कर्मजन्यादृष्टानामित्यर्थः, विषमविपाकतया फलजनने प्रतिबन्धकरहिततया कर्मणां प्रतिक्षणफलजननस्वभावतयेति यावत्। [illegible] विषमविपाकतया विषमो विभिन्नकालीनो विपाको भोगो येषां तत्त्वं न, विभिन्न-

वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ।
उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः ॥ २ ॥

यथा वर्षादिनस्याव्यवहितवर्षादिनपूर्वकत्वे साध्ये राशिविशेषावच्छिन्नरविचारपूर्वकत्वमुपाधिस्तथाहोरात्रस्याव्यवहिताहोरात्रपूर्वकत्वेऽव्यवहितसंसारपूर्वकत्वमुपाधिः, भवोपाधिः संसारावच्छेदककालोपाधिः स एव उपाधिरित्यर्थः। सुषुप्तिकाले कतिपयव्यक्तिनिष्ठभोगजनकादृष्टनिरोधवत् कालविशेषात् समस्तात्मनां समस्तादृष्टनिरोधस्तदिदमुक्तं वृत्तिरोधः सुषुप्तिवदिति। उद्भित् शाकविशेषः तस्य यथा तण्डुलकणात् शाकविशेषबीजाच्च उद्भवः, यथा वा वृश्चिकस्य गोमयाद्वृश्चिकाच्च उद्भवस्तथा कालविशेषेऽदृष्टविशेषात् केवलात् इदानीञ्च ब्राह्मणात् ब्राह्मणोत्पत्तिः, वैजात्यस्य कार्य्यतावच्छेदकत्वान्न व्यभिचारः। यथा मायावी सूत्रसञ्चाराधिष्ठितदारुपुत्रकं कृत्वा दारुपुत्रकं घटमानयेत्यादि नियोज्य घटानयनं सम्पाद्य बालकस्य

---

कालीनभोगजनकतयेति पर्य्यवसितम् इत्याहुः। एकदा नानाफलानुत्पादस्तु फलबलेन सामग्रीप्रतिबन्धकत्वकल्पनादेवोपपादनीय, तथाच कालोपाधिः भोगाधिकरणं कालोपाधित्वादित्यनुपच्छेदावच्छेदेन साध्यसिद्धेर्विरोध इति भावः। युगपदिति एकदा समस्तादृष्टप्रत्यावर्तनत्वानुपपत्तेरित्यर्थः। घटादिसम्प्रदायोच्छेदात् घटादिप्रवाहविच्छेदादित्यर्थः। कारिकायां वर्षादिवदिति वर्षामध्यस्थितदिनत्वरूपहेतुवदित्यर्थः, आदिना अहरादिपरिग्रहः। प्रथमसाधकमुद्धरति, व्याख्यायां यथेत्यादिना, यथा वर्षादिनम् अव्यवहितवर्षादिनपूर्वकं वर्षादिनत्वात् साम्प्रतिकवर्षादिनवदित्यत्र वर्षादिनत्वरूपहेतुः कर्कटसिंहान्यतरराश्यवच्छिन्नरव्यधिकरणकालाव्यवहितपूर्वकत्वरूपेण उपाधिना सोपाधिकत्वेन नाव्यवहितवर्षादिनपूर्वकत्वनिरूपितनियमवान् तथा अहोरात्रम् अव्यवहिताहोरात्रपूर्वकम् अहोरात्रत्वात् साम्प्रतिकाहोरात्रवदित्यत्र अहोरात्रत्वरूपो हेतुः अव्यवहितसंसारपूर्वकत्वरूपेण भवेनोपाधिना सोपाधिकत्वेन नाव्यवहिताहोरात्रपूर्वकत्वनिरूपितनियमवानिति समुदितवाक्यार्थम्। अत्र वर्षाप्रथमदिनामभावेव कर्कट-सिंहान्यतरराश्य-

व्युत्पत्तौ प्रयोजकस्तथेश्वरोऽपि प्रयोज्य-प्रयोजकभावापन्नं शरीर-द्वयं परिगृह्य व्यवहारं कृत्वा तदानीन्तनानां शक्तिं ग्राहयति। एवं घटादिसम्प्रदायमपि स्वयं कृत्वा शिक्षयति, तदिदमुक्तं मायावत् समयादय इति। समयः शक्तिग्रहः॥ २॥

बाधके निरस्ते साधकमप्याह,—

**जन्म-संस्कार-विद्यादेः शक्तेः स्वाध्याय-कर्मणोः।**
**ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्॥ ३॥**

सम्प्रदायस्य वेदादिसम्प्रदायस्य ह्रासोऽनुमीयतां, कुतः जन्मादे-र्ह्रासदर्शनात्। प्रयोगश्च वेदादिसम्प्रदायोऽयमत्यन्तमुच्छिद्यते ह्रसमानत्वात् प्रदीपवत्। स्वरूपासिद्धिवारणायाह जन्मेति। पूर्वं मानस्यः प्रजास्ततः पुत्रमात्रार्थिताप्रयुक्तमैथुनजाः सम्प्रति सम्भोग-कामिप्रवृत्त्यावर्जितजन्मान इति जन्महासः। पूर्वं चतुष्प्रभृतिषु

---

तच्छिन्नत्व्यधिकरणकालाव्यवहितपूर्वत्वस्य उपाधेः साधनाव्यापकत्वम्। "आसीत् दिवा सुषुप्ति मिह्नोरात्रं क्रमात् क्रमम्" इति नियमेन चनादिदिनोत्तरं रात्रित्वत्वे ततः क्रमशोऽहोरात्रं, तादृशाहोरात्रान्तर्भावेण अव्यवहितसंसारपूर्वकत्वस्य उपाधेः साधनाव्यापकत्वं, तादृशनियमानङ्गीकारे उपाधेः साधनाव्यापकत्वव्याघातः। केचित्तु सर्गाद्यदिनान्तर्भावेण उपाधेः साधनाव्यापकत्वमित्याहुः। तन्मन्दं परैः प्रलयानभ्युपगमेन तन्मते सर्गाद्यदिनाप्रसिद्धेः। द्वितीयबाधकमुद्धरति सुषुप्तिकालवदिति। तृतीयबाधक-मुद्धरति वह्निवदिति, चतुर्थबाधकमुद्धरति यथा चैत्यादि, पञ्चमबाधकमुद्धरति एत-मित्यादि॥ २॥

बाधके निरस्ते इति तथाच बाधकसत्त्वे साधकमकिञ्चित्करं भवति अतो बाधक-निरासानन्तरं साधकोत्कीर्त्तनमिति भावः। ह्रास इति स्वाश्रयकालोत्तरकालवृत्त्य-भावप्रतियोगित्वमित्यर्थः। अभिमतसिद्ध्यनुकूलं प्रयोगमाह प्रयोगश्चेति अनुमानञ्चेत्यर्थः, अत्यन्तमुच्छिद्यत इति स्वसजातीयानधिकरणकालवृत्तिध्वंसप्रतियोगित्वम् अत्यन्तोच्छेदः, तथाच स्वसजातीयानधिकरणकालः प्रलयकाल एव तद्वृत्तिध्वंसप्रतियोगित्वं वेदादिसम्प्र

संस्कारः ततोगर्भे ततोजननानन्तरम् इदानीं कथञ्चिदिति संस्कारह्रासः। पूर्वं सहस्रशाखस्य चतुर्वेदस्याध्ययनं तत एकस्याः शाखाया इत्यादिक्रमेण विद्याह्रासः। विद्यादेरित्यादिना वृत्ति-धर्मादिसंग्रहः, पूर्वमुञ्छशिलवृत्तयस्ततोऽयाचितवृत्तयस्ततः कृष्यादिवृत्तयस्ततः सेवावृत्तीय इति वृत्तिह्रासः। पूर्वं तपोज्ञान-यज्ञ-दानात्मकचतुष्पाद्धर्मस्ततस्त्रेतादौ एकैकह्रासः कलौ च विसंष्ठुलः स्खलद्दानैकपादिति धर्मह्रासः। पूर्वं यज्ञशेषभुजस्ततोऽतिथिशेषभुजस्ततः स्वार्थसाधितभुजस्ततोभृत्यादिसहभुज इत्यपि धर्मह्रासः। स्वाध्यायस्याध्ययनस्य कर्मणो यागादेः शक्तेः सामर्थ्यस्य ह्रासात् अध्ययनशक्तेः कारणस्य ह्रासात् विद्याशक्तेः कार्यस्य ह्रास इति पृथङ्निर्देशः। एवञ्च ब्रह्माण्डनाशे तदन्तर्गतप्राणिनां नाश इति प्रलयसिद्धिः। भक्ष्य-पेयाद्यद्वैतराग-जीविका-कुतर्काभ्यासव्यग्रताभिसन्धि-

---

दायस्येति भावः। ह्रसमानत्वादिति पूर्वपूर्वापेक्षया अपकृष्टत्वादित्यर्थः। इदानीं कथञ्चिदिति इदानीं लौकिकव्यवहारमात्रमित्यर्थः। उञ्छशिलवृत्तय इति क्षेत्रस्वामिना गृहीतधान्यात् क्षेत्रात् कणशः समुच्चयरूपाण्यादानानि, विसंष्ठुलः अतिजीर्णः, स्खलद्दानैकपादिति स्खलन् प्रत्यहमपचीयमानशीर्णतया द्रवन्तः स्खलन् दानरूप एकपादो यस्य स तथाविध इत्यर्थः। सामर्थ्यस्य ह्रासादिति अध्ययनसामर्थ्यस्य यागसामर्थ्यस्य च ह्रासादित्यर्थः, ननु पूर्वं विद्याह्रासः इत्युक्तम् अधुना अध्ययनह्रास इत्युक्तौ कथं न पौनरुक्त्यम् इत्याशङ्क्याह अध्ययनशक्तेरिति, तथा चाध्ययनशक्तिह्रासात् अध्ययनरूपकार्यस्य ह्रासः स एव विद्याशक्तिह्रासः अध्ययनस्यैव विद्याशक्तिरूपत्वादित्येतत्प्रदर्शनार्थमेव पृथगुपादानमिति भावः। ब्रह्माण्डनाश इति यथा कुथितकपित्थफलान्तर्गतोदुम्बरनाशे तदन्तर्गतमशकमत्कुणनाशः तथा ब्रह्माण्डनाशे तदन्तर्गतसकलप्राणिनां नाश इति भावः। महाजनपरिग्रहाच्च वेदप्रामाण्यमत इत्युक्ते कः स महाजन इत्याकाङ्क्षायामाह भक्ष्येत्यादि, भक्ष्य-पेयादीत्यादिना अभक्ष्यापेयपरिग्रहः, भक्ष्याभक्ष्ययोः पेयापेययोश्च यदद्वैतम् अभेदग्रहः तन्मूलको यो राग इच्छाविशेषः तन्निबन्धना तादृशरागचरितार्थतार्था या प्रवृत्तिः, जीविका जीवनोपायः तन्निबन्धना या प्रवृत्तिः, कुतर्कस्य असत्तर्कस्य वेद-

पाषण्डसंसर्गप्रतारणादिनिबन्धनान्या या प्रवृत्तिर्यागादौ तद्बाह्यमहा-जनस्तत्परिग्रहात् वेदप्रामाण्यमिति ॥ ३ ॥

स्तवकार्थसंग्राहकश्लोकमाह।

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीड़ति।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवम्
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥४॥

इति द्वितीयः स्तवकः।

---

विरुद्धतर्कस्तदिति यावत्, योऽभ्यासः यज्ञेरन्तर्थं तत्र या व्यग्रता आसक्तिः तन्निबन्धना या प्रवृत्तिः, अभिसन्धिः परानिष्टेच्छा तन्निबन्धना या प्रवृत्तिः, पाषण्डः वेदाचारत्यागी तेन सह यः संसर्गः तन्निबन्धना या प्रवृत्तिः, प्रतारणा परवञ्चनेच्छा तन्निबन्धना या प्रवृत्तिः, आदिपदात् ऐश्वर्याभिमानादिनिबन्धना या प्रवृत्तिः, तत्तत्प्रवृत्तिभेदबुद्धिविभिन्ना या यागादिगोचरप्रवृत्तिः तद्वान् महाजन इत्यर्थः ॥ २ ॥

अन्तेष्वपि अन्तकालेष्वपि तं प्रति उद्दिश्य नमन् भूयासम् इत्याशंसा। स च इत्या-शङ्कायामाह कारं कारमित्यादि, यः इन्द्रजालमिव अलौकिकाद्भुतमयम् अलौकिकं लोका-तीतम् अद्भुतमयं विचित्ररूपं जगत् कार्यजातं कारं कारं कृत्वा कृत्वा संहरन् संहारं कुर्वन् हारं हारं धृत्वा धृत्वा कुर्वन् उत्पादयन् क्रीड़ति स्वस्वरूपेण स्फुरति, अन्योऽपि क्रीडासक्तः यथा इन्द्रजालं पुनः पुनर्घटयन् क्रीड़ति तथा क्रीड़तीत्यर्थः, क्रीडावैचित्र्य-ज्ञापनार्थम् अलौकिकाद्भुतमयमिति जगद्विशेषणम्। ननु दण्डादिनिरपेक्षं विना कथं विचित्रकर्म कृतम् इत्याकाङ्क्षायामाह मायावशादिति स्वीय-ऐश्वर्यरूपाद्भुतशक्तिवशादि-त्यर्थः, मायावशादिति संहरन् कुर्वन् इत्युभयत्रान्वितम्। तं कीदृशं, देवं मुख्यं, स्तुतिप्रयोजकमाह निरवग्रहेति निष्प्रतिबन्धस्फुरदभिध्यानप्रभावम्, अव्याहतेच्छमिति यावत्, विश्वासैकभुवं प्रमादादिदोषरहितं, भवं जगन्मूलकारणं, शिवं मङ्गलस्वरूपम् ॥ ४ ॥

इति श्रीकामाख्यानाथतर्कवागीशविरचितायां कुसुमाञ्जलिव्याख्याविवृतौ
द्वितीयस्तवकव्याख्याविवृतिः समाप्ता।

## तृतीयः स्तवकः।

तदभावावेदकप्रमाणसम्भवादिति तृतीयविप्रतिपत्तिः। भूतले घटाभाववदीश्वरस्याप्यनुपलब्धेरभावस्य ग्रहात्, परमात्मनोऽयोग्यतया योग्यानुपलब्धेरभावात् नाभावग्रहो यदि तदा शशशृङ्गस्याप्ययोग्यस्य नाभावः सिद्ध्येदित्यत्राह।

योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम्।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम् ॥ १ ॥

अयोग्ये परमात्मनि योग्यानुपलब्धिः कुतः, सैव बाधिका, या चास्ति सा न बाधिका, अन्यथाकाश-धर्माधर्मादिविलयापत्तेः। शृङ्गन्तु योग्यमेव तथाच कुतः प्रतिबन्धिः। अयोग्यन्तु शशशृङ्गं न

---

तृतीयां विप्रतिपत्तिं दूषयितुमुत्थापयति तदभावावेदकेति, अनुपलब्धिरभावसाधिका न वेति विप्रतिपत्तिः, अत्र विधिकोटिः बौद्धानाम् अभावकोटिः नैयायिकानाम्। न चानुपलब्ध्या सर्वत्र गगनाभावग्रहेऽपि यथा गगनस्य न अस्तित्वव्याघातः तथा अनुपलब्ध्या ईश्वराभावग्रहेऽपि न ईश्वरस्यास्तित्वव्याघात इति वाच्यम्। क्षित्यादिकं यदि ईश्वरकर्तृकं स्यात् तदा तद्वत्तया उपलभ्येत यतो नोपलभ्यते अतः ईश्वरकर्तृकत्वानुपलब्ध्या क्षित्यादौ ईश्वरकर्तृकत्वाभावनिश्चयेन क्षितिः सकर्तृका कार्यत्वादित्यनुमानबाधापत्तेरिति बौद्धानामाशयः। अतिरिक्तपदार्थस्य आत्महस्तित्वनये तु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकपरमात्माभाव एव साधनीय इति न काचिदनुपपत्तिरिति। नन्वनुपलब्धिमात्रस्य अभावग्राहकत्वे अतीन्द्रियमात्रोच्छेदप्रसङ्गः अतः भवद्भिरपि योग्यानुपलब्धेरभावग्राहकत्वमभ्युपेयं तथाचेश्वरस्यायोग्यतया तदनुपलब्ध्या कथमीश्वराभावसिद्धिरित्याशङ्कते परमात्मन इति। योग्यानुपलब्धिरिति स्वप्रतियोग्युपलब्धिविषयनिष्ठयोग्यतासम्बन्धिन्यादिः, योग्यानुपलब्धिः योग्यताविशिष्टानुपलब्धिरित्यर्थः। सैव योग्यानुपलब्धिरेव, बाधिका अभावग्राहिका, या चास्तीति, तथाच ईश्वरे यानुपलब्धिरस्ति सा नाभावग्राहिका योग्यानुपलब्धेरेवाभावग्राहकत्वादिति भावः। अन्यथा अनुपलब्धिमात्रस्याभावग्राहकत्वे इत्यर्थः। कारिकायां प्रतिबन्धिरिति यदि तु शृङ्गं योग्यमेव तदा

बाध्यते किन्तु साधकाभाव एव तत्र। प्रकृते च पञ्चमस्तवके साधकस्य वक्तव्यत्वात्। ननु कर्त्तृत्वव्यापकशरीर-प्रयोजनाभिसन्धानयोरभावात् ईश्वरस्याभावोऽनुमेय इत्यत्राह क्वानुमानमनाश्रयमिति। ईश्वरस्याश्रयस्य पक्षस्यासिद्धेः, सिद्धौ च धर्मिग्राहकमानेन अनुमानबाध एव ॥ १ ॥

ननु असत्ख्यात्युपनीत ईश्वरस्तत्र कर्त्तृत्वाभावः तस्यैव वाभावः साध्य इत्यत्राह।

**व्यावर्त्त्याभाववत्तैव भाविकी हि विशेष्यता।**
**अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥**

---

सुतरां न प्रतिबन्धिरित्यर्थः, तराम् इति सुतरामित्यर्थे निपातः, ईदृशमेवार्थं वर्णयति, व्याख्यायां यद्वन्त्विति। न बाध्यत इति न निषिध्यत इत्यर्थः, यथाचायोग्यप्रश्नाभाववत्तो न कुत्रापीति भावः। इदमुपलक्षणं यथा परमाणुमोऽयोग्यतया न तदनुपलम्भात् तदभाववत्त्वः तथा परमाणुकर्त्तृकत्वस्यापि अयोग्यपरमाणुघटितत्वेनायोग्यत्वात् न तदनुपलम्भात् तदभाववत्त्व इति द्रष्टव्यम्। व्यापकानुपलब्धिलिङ्गकानुमानं बाधकमाशङ्क्य निषेधति नन्वित्यादिना, प्रयोजनाभिसन्धानेति प्रयोजनाभिसन्धानञ्च फलेच्छा, तथाच फलेच्छाजन्या उपायेच्छा तज्जन्या प्रवृत्तिरिति परम्परया फलेच्छाजन्यायाः प्रवृत्तेः व्यापकत्वं फलेच्छायामिति व्यापकीभूतफलेच्छाभावात् कर्त्तृत्वाभावसिद्धिः। न च फलेच्छायाः प्रवृत्तिव्यापकत्वेऽपि कर्त्तृत्वव्यापकत्वाभावात् कथं फलेच्छाभावेन कर्त्तृत्वाभावसिद्धिरिति वाच्यम्। प्रवृत्तेरेव कर्त्तृत्वरूपत्वात्। अनुमानञ्च ईश्वरः कर्त्तृत्वाभाववान् कर्त्तृत्वव्यापकस्य शरीरस्य प्रयोजनाभिसन्धानस्य वा अभावात् इत्येवंरूपम्। विनिगमकाभावात् हेतुद्वयानुसरणम्, अथवा एकलिङ्गेन अनुमानस्योक्ता दार्ढ्यार्थं लिङ्गान्तरेणानुमानं दर्शितम्। कारिकायां क्वानुमानमनाश्रयमिति अनाश्रयम् अलीकाश्रयम् क कुत्रेत्यर्थः। टीकायाम् अनुमानबाध एवेति, तथाच यादृशानुमानेन ईश्वररूपधर्मिसिद्धिः तादृशानुमानेन ईश्वरे कर्त्तृत्वस्यापि सिद्धेः प्रकृतानुमानबाध एवेत्यर्थः ॥ १ ॥

पर्यायविशिष्टवत् प्रकृते नन्विति, असत्ख्यात्युपनीत इति असतः अलीकस्य ख्यातिः

व्यावर्त्त्यः प्रतिक्षेप्यः, तदभाववत्ता भाविकी पारमार्थिकी स्थि यतः विशेष्यता अभावस्याश्रयता, तथाचालीकं न विशेष्यमित्यर्थः। अभावविरहात्मत्वं प्रतियोगित्वमवस्तुनो नेति नालीकस्य प्रतिषेधाधिकरणत्ववत् प्रतिषेध्यत्वमपीति भावः ॥ २ ॥

ननु अयोग्यस्याप्यनुपलब्ध्या कथं नाभावग्रह इत्यत आह,

**दृष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।**
**न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने ॥ ३ ॥**

योग्यानुपलब्धिरेवाभावग्राहिका, अन्यथाऽतीन्द्रियमात्रोच्छेदापत्तेः। योग्यता च प्रतियोगि-तद्व्याप्येतरयावदुपलम्भसामग्रीसमव-

---

ज्ञाने, तदुपनीतः तद्विषय इत्यर्थः। तस्यैव नेति, तथाच ईश्वरः सर्वकालवृत्त्यभावप्रतियोगी प्रत्यक्षाविषयत्वात् ईश्वरोनास्ति अखिलेनोपलम्भाभावादित्यनुमानेन ईश्वराभावः साधनीय इति भावः। प्रतिक्षेप्यः प्रतिषेध्यः प्रतियोगीति यावत्। विशेष्यता इत्यस्यापि वस्तुनः इत्यनेन सम्बन्धः, तथाच विशेष्यता अभावाश्रयता वस्तुन एव नालीकस्येति भावः ॥ २ ॥

भान्तः पुनः शङ्कते नन्विति, अयोग्यस्य प्रत्यक्षाविषयस्य परमात्मनः अनुपलब्ध्या योग्यतासहितानुपलब्ध्येत्यर्थः। कथं नाभावग्रह इति, तथाच प्रतियोगि-तद्व्याप्येतरपरमात्मोपलम्भकारणधर्मेन्द्रियसन्निकर्ष-बाधनिश्चयाभावादिसम्वलनरूपयोग्यतासत्त्वादिति भावः। अश्वशृङ्गप्रत्यक्षस्थले दीपचक्षुरादितज्ज्ञानसामग्रीरूपा योग्यता वाच्या, तथाच तस्यां नालीकस्यानुपलम्भः उपलम्भस्यैव सत्त्वात् अनुपलम्भदशायाञ्च तज्ज्ञानसामग्रीरूपा योग्यतैव नास्तीति समाधत्ते, दृष्टोपलम्भेत्यादि। प्रतियोगि तद्व्याप्येतरेति तद्व्याप्यः प्रतियोगिव्याप्यः प्रतियोगिसन्निकर्षः इत्यर्थः, प्रतियोगिनः तत्सन्निकर्षस्य च प्रत्यक्षहेतुतया प्रतियोग्युपलम्भकसामग्र्यन्तर्गतत्वात् तादृशसामग्रीसमवधानं कृत्वाप्यभावप्रत्यक्षे न सम्भवतीत्युक्तं प्रतियोगि-तद्व्याप्येतरेति। अयं भावः प्रत्यक्षस्य द्विविधा सामग्री सद्विषयस्थले विषयसहितः चक्षुरादिकारणकलापः, असद्विषयस्थले च विषयरहितः पित्तादिदोषसहितश्च चक्षुरादिकारणकलापः। तत्र प्रथमा विषयसहिता द्वितीया च सर्वदैव विषय

धानम्, एवञ्च शशशृङ्गे योग्यता दुष्टा दोषघटितोपलम्भसामग्री वाध्या, तस्यां सत्यामनुपलब्धिर्न किन्तूपलब्धिरेव स्यात्, अदुष्टे च सा योग्यता नास्तीति ॥ ३ ॥

नन्वात्मा किञ्चिदनभिज्ञः स्वनिष्ठकर्तृत्वानिरूपकचितिको वा आत्मत्वादित्यत्राह।

**इष्टसिद्धिः प्रसिद्धेऽंशे हेत्वसिद्धिरगोचरे।**
**नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥४॥**

प्रसिद्धे संसार्य्यात्मनि पक्षे इष्टसिद्धिः सिद्धसाधनम्, अगोचरे अज्ञाते ईश्वरे हेत्वसिद्धिः हेतोरज्ञानं, आत्मत्वेन सामान्यतः सिद्धः पक्षयेत् तत्राप्यस्मदादिस्तदितर आत्मा वा पक्ष इति विकल्पे सिद्ध-

---

रक्षिता इति पर्य्यवसितम्, अनयोरेकतरसत्त्व एव प्रत्यक्षं जायते। शशशृङ्गस्य पक्षीकत्वेन तत्प्रत्यक्षसामग्री द्वितीया वाध्या तत्सत्त्वे च शशशृङ्गस्य प्रत्यक्षमेवेति न प्रत्यक्षाभावरूपा-नुपलब्धिः, तदसत्त्वे च तत्स्वरूपा तद्योग्यतैव नास्ति इत्यलीकस्यैव योग्यतामहिता अनुपलब्धिः कदापि न सम्भवतीति, प्रतियोग्युपलम्भश्च प्रतियोगिप्रकारकप्रत्यक्षम् अती-न्द्रियगगनादिप्रकारकप्रत्यक्षस्य अमत्वात् तदुपलम्भसामग्री दोषघटिता वाध्या तथाच तादृशयोग्यतासत्त्वे अनुपलब्धिरेव नास्तीति न गगनाद्युच्छेदः इति ॥ ३ ॥

ईश्वरत्वेन ईश्वरं पक्षीकृत्य कर्तृत्वाभावानुमानस्य पक्षासिद्धिदोषदुष्टत्वेऽपि आत्मत्वेन आत्मनां सिद्धत्वात् तेषु असर्वज्ञत्वं चित्यादिकर्तृत्वाभावञ्च साधयितुं प्रवृत्त एवेत्याशङ्कते नन्वित्यादिना, किञ्चिदनभिज्ञः असर्वज्ञ इत्यर्थः, नै च परेषां मते सर्वज्ञत्वस्याप्रसिद्धेः अलीकाभावस्य प्रागेव निरस्तत्वाच कथं सर्वज्ञत्वाभावः साधयितुं शक्य इति वाच्यम्। किञ्चिदनभिज्ञपदेन स्ववृत्तिज्ञानविषयतानवच्छेदकधर्मकत्वस्य विवक्षितत्वात्। तथाच जीवात्मनां सकलधर्मावच्छिन्नविषयकज्ञानाभावात् यद्धर्मावच्छिन्नविषयकज्ञानाभावः स्ववृत्तिज्ञानविषयतानवच्छेदकतादृशधर्मकत्वम् अव्याहतमेव, नैयायिकमते ईश्वरज्ञानस्य सर्वधर्मावच्छिन्नविषयकत्वात् ईश्वरे स्ववृत्तिज्ञानविषयतानवच्छेदकधर्मकत्वं न सम्भवतीति भावः। स्वनिष्ठकर्तृत्वानिरूपकचितिकोवेति, तथाच जीवात्मनां यादृशचितिकर्तृत्व-

साधनं हेत्वसिद्धिर्वा। नन्वात्मत्वं जातिः पक्षस्तत्राह जातावपि तथैव सेति। आत्मत्वं जातिर्न क्षितिकर्त्री इत्यत्रेष्टसिद्धिः सिद्धसाधनं, हेतोश्च तत्रासत्त्वमिति हेत्वसिद्धिरित्यर्थः ॥ ४ ॥

नन्वागमादिसिद्धात्मनि अकर्तृत्वं साध्यं तत्राह।

**आगमादेः प्रमाणत्वे बाधनादनिषेधनम्।**
**आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥**

आगमादेः प्रमाणत्वे तत एव ईश्वरस्य कर्तृत्वादिसिद्धौ कर्तृत्वाद्यभावसाधने बाधः। आगमादेरप्रमाणत्वे सैवाश्रयासिद्धिः उद्धता उत्कटा ॥ ५ ॥

---

भावः स्वनिष्ठकर्तृत्वानिरूपकत्वाद्यक्षितिकत्वम् अव्याहतमेव, नैयायिकमते ईश्वरस्य सर्वक्षितिकर्तृत्वात् स्वनिष्ठकर्तृत्वानिरूपकक्षितिकत्वं न सम्भवतीति हृदयम्। हेतोरज्ञानमिति तथाच पक्षवृत्तित्वेन हेतुज्ञानस्यानुमितिहेतुत्वात् पक्षाज्ञाने विशेषणज्ञानाभावात् न पक्षवृत्तित्वविशिष्टहेतुज्ञानमिति भावः। आत्मत्वेन सामान्यतः सिद्ध इति तथाच जीवेश्वरसाधारणात्मत्वेन सामान्यरूपेण पक्षत्वान्न पक्षासिद्धिरिति भावः। एतदपि विकल्पं दूषयति सर्वेत्यादिना। कारिकायां नान्या सामान्यतः सिद्धिरिति न अन्या अन्यादृशी सामान्यतः सामान्यरूपेण आत्मत्वेन सिद्धिः पक्षसिद्धिरित्यर्थः। जातावपीतीति। न च आत्मत्वं न सर्वज्ञ-सर्वकर्तृव्यक्तिसमवेतं जातित्वात् गोत्ववदित्यनुमानात् न सिद्धसाधनं हेत्वसिद्धिर्वेति वाच्यम्। निषेध्यस्य सर्वज्ञ-सर्वकर्तृव्यक्तिसमवेतत्वस्याप्रसिद्धत्वात् अलीकाभावस्य प्रागेव निरस्तत्वाच्च निषेधस्याशक्यत्वादिति ॥ ४ ॥

ईश्वरपक्षककर्तृत्वाभावानुमाने आगमजन्यशाब्दात्मकपक्षसिद्धिसम्भवात् कथं पक्षासिद्धिरित्याशङ्कते, नन्वित्यादिना। आगमादेरिति, न आगमादेर्धर्म्यंशे प्रामाण्येऽपि न सर्वज्ञत्वादिधर्मांशे प्रामाण्यमिति वाच्यम्। अविशेषात् उभयत्रैव प्रामाण्यसिद्धेरिति। अनिषेधनमिति न कर्तृत्वाद्यभावसाधनमित्यर्थः। आभासत्वे इति कारिकांशं विवृणोति, आगमादेरप्रमाणत्व इति, अप्रमाणत्वं प्रमाजनकत्वाभावे, उत्कटेति प्रबलेत्यर्थः ॥ ५ ॥

अत्र चार्वाकाः योग्यताविशेषणेन किं, यन्न प्रत्यक्षं तन्नास्ति इत्यनुपलब्धिमात्रमेव बाधकं स्यात्, अनुमानविलोपश्चेष्ट एव धूमदर्शनानन्तरं वह्न्यर्थप्रवृत्तिश्च सम्भावनामात्रादिति तत्राह।

**दृष्टादृष्ट्योर्न सन्देहोभावाभावविनिश्चयात्।**
**अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम्॥ ६॥**

सम्भावना हि सन्देहः, स च दृष्टौ नास्ति तस्य निश्चयात्, अदृष्टौ च नास्ति अनुपलब्धौ तदभावस्यैव निर्णयात्। एवमदृष्ट्या अनुपलब्ध्या, हेतौ प्रत्यक्षकारणे चक्षुरादौ बाधिते सति प्रत्यक्षमपि प्रमाणं न स्यात्, अनुपलब्धिकालेऽपि तस्य सत्त्वे तु व्यभिचारात् नानुपलब्धिरभावावधारणे हेतुः। एवञ्च गृहान्निर्गतश्चार्वाकः

---

योग्यताविशेषणेन किमित्यस्य अनुपलब्धेरित्यादिः, अनुपलब्धिमात्रमिति मात्रपदेन योग्यतादिसहकारिताव्यवच्छेदः। बाधकमिति अभावग्राहकमित्यर्थः, ननु प्रत्यक्षाविषयपदार्थबोधार्थम् अनुमानस्यावश्यकत्वं, यदि "यदप्रत्यक्षम् तन्नास्ति" इति चार्वाकसिद्धान्तात् प्रत्यक्षाविषयपदार्थस्यासत्त्वं तदा अनुमानमफलं स्यादित्यनिष्टापत्तिमाह, अनुमानविलोपश्चेति। नन्वनुमानविलोपे धूमदर्शनानन्तरं वह्निमनुमाय वह्न्यर्थं प्रवर्त्तनं तन्न स्यात् इत्यत आह धूमदर्शनानन्तरमिति, सम्भावनामात्रादिति संशयमात्रादित्यर्थः, तथाच वह्निं सन्दिहानः सन् वह्न्यर्थं पर्वतादौ प्रवर्त्तत इति भावः। न सन्देह इति तथाच भवन्मते संशयस्यालीकतया 'प्रवृत्तिश्च सम्भावनामात्रात्' इत्यसङ्गतं स्यादिति भावः। दृष्टादृष्ट्योरिति सप्तमीद्विवचनान्तं, दृष्टिः वह्न्यादौ चक्षुरादिसन्निकर्षः, तत्सत्त्वे भावस्य वह्न्यादेर्निश्चयः, अदृष्टिः वह्न्यादौ चक्षुरादिसन्निकर्षाभावः तत्काले वह्न्याद्यनुपलब्ध्या अभावस्य वह्न्याद्यभावस्य सिद्धिरिति न वह्निसम्भावनेत्यर्थः। अदृष्टिबाधिते हेतावित्ति हेतौ प्रत्यक्षहेतौ गोलकादौ अदृष्ट्या अनुपलब्ध्या बाधिते अभावप्रतियोगितया निर्णीत इत्यर्थः। प्रत्यक्षमपि प्रमाणं न स्यादिति प्रत्यक्षमेव प्रमाणम् इति चार्वाकसिद्धान्तव्याघातः स्यात् इत्यर्थः। नानुपलब्धिरिति नानुपलब्धिमात्रमित्यर्थः। एवञ्चेति अनुपलब्धिमात्रस्याभावनिर्णयहेतुत्वे चेत्यर्थः। विक्रोशेदिति, न च गृहादाहु-

पुत्र-दाराद्यभावादिकमवधार्य्य विक्रोशेत्, परावृत्तोऽपि कुटुम्बं नाभादयेत् तदा तेषां सत्त्वे चानुपलब्धिर्व्यभिचारिणी न हेतुः स्यादिति ॥ ६ ॥

ननु यद्यनुपलम्भमात्रं नाभावसाधकं तदा अयोग्योपाधिशङ्कया धूमादावपि व्यभिचारशङ्कया न व्याप्तिनिश्चयः स्यादिति गतमनुमानेनेत्यत्राह।

**शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम्।**
**व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ ७ ॥**

तद्देश-तत्कालयोर्व्यभिचाराभावनिश्चयात् कालान्तरस्थ-देशान्तरस्थयोर्व्यभिचारशङ्का स्यात् कालान्तर-देशान्तरस्थज्ञानस्यानुमानादेवेति सिद्धमनुमानम्। शङ्का न चेत्, ततः शङ्काविरहे तरां सुतरामनुमानम्। ननु किं शङ्कानिवर्त्तकं तत्राह, तर्कः शङ्कावधिर्मत इति।

संमने तत्तदधिकरणानाम् असन्निकृष्टत्वात् कथं पुत्राद्यभावनिश्चयः सन्निकृष्टदेशे अभावनिश्चयेऽपि ध्वंसानिश्चयान्न शोकः स्यादिति वाच्यम्। अधिकरणज्ञानमात्रम् अभावधीहेतुः न तु तदिन्द्रियसन्निकर्षोऽपि इति चार्वाकसिद्धान्तमाश्रित्य तदुक्तत्वात्। अत एव तेषां मते तत्तदधिकरणासन्निकर्षेऽपि देवताद्यभावो गृह्यत इति। न च पुत्रादेः तदानीं स्मरणात् न विक्रोश इति वाच्यम्। पुत्रादिस्मरणस्य तदभावधीं प्रत्यनुकूलत्वेन प्रतिकूलत्वाभावात् प्रतियोगिज्ञानस्य अभावधीहेतुत्वादिति ॥ ६ ॥

योग्यानुपलब्धेरभावग्राहकत्वे योग्यानामुपाधीनां योग्यानुपलब्ध्या अभावनिर्णयेऽपि अयोग्यानाम् उपाधीनाम् अभावनिर्णायकाभावात् हेतौ संशयेन व्यभिचारसंशयात् व्याप्तिनिश्चयाभावेन अनुमानविलोपः स्यादिति चार्वाकः शङ्कते नन्वित्यादिना, अनुपलम्भमात्रमिति तथाच अयन्मते अनुपलब्धिमात्रस्याभावनिर्णायकत्वात् अयोग्योपाधेरनुपलब्ध्या अभावनिश्चयेन संशयासम्भवात् न व्याप्तिनिश्चयासम्भव इति नानुमानविलोप इति भावः। व्यभिचारशङ्कया न व्याप्तिनिश्चय इति, प्रत्यक्षनिश्चये वाधसंशयस्य प्रतिबन्धकत्वमतेनेदमुक्तम्। शङ्कावधिरिति शङ्काया अवधिः सीमा निवर्त्तक इति यावत्,

विपक्षबाधकतर्काच्छङ्काविरहो मतः सम्मत इत्यर्थः। ननु तर्कस्यापि व्याप्तिमूलकत्वेऽनवस्थेत्यत आह, व्याघातेत्यादि। तर्कमूलव्याप्तौ न शङ्का व्याघातात्, कृत्स्नकारणं विना कार्य्योत्पत्तिशङ्कायां तदर्थं भोजनादौ परप्रतिपत्त्यर्थञ्च शब्दप्रयोगादौ न प्रवर्त्तेतेति। एवञ्च तर्कानवतारे शङ्कितोपाधिरेवाप्रयोजक इत्युच्यते। तदुक्तं "यावद्वाव्यतिरेकित्वं शतांशेनापि शङ्क्यते। विपक्षस्य कुतस्तावद्धेतोर्गमनिका बलम्"। विपक्षस्य विपक्षे हेतोरव्यतिरेकित्वं सत्त्वं यावच्छङ्क्यते तावद्धेतोर्न गमकत्वमिति भावः। व्यभिचारशङ्का

---

विपक्षबाधकतर्कादिति विपक्षे व्यभिचारशङ्के बाधकात् प्रतिबन्धकात् तर्कादित्यर्थः, स च तर्कः धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्यादिरूपः। न च तर्कस्य विरोधिविषयकत्वाभावेन कथं व्यभिचारशङ्कायाः प्रतिबन्धकत्वमिति वाच्यम्। फलबलेन तद्विशिष्टबुद्धिं प्रति तदापादकतर्कत्वेन प्रतिबन्धकत्वस्य कल्पनीयत्वात्। ननु यत्र तर्केण शङ्कानिवृत्तिः तत्रानवस्था तर्कमूलीभूतव्याप्तिज्ञाने शङ्कानिवृत्तये तर्कान्तरस्य एवं तन्मूलभूतव्याप्तिज्ञानेऽप्यपरस्य अपेक्षणीयत्वादित्याशङ्कते ननु तर्कस्येत्यादिना, व्याप्तिमूलकत्वेन आपादकनिष्ठापाद्यव्याप्तिग्रहजन्यत्वेनेत्यर्थः, व्याघातादिति तर्काभावातिरिक्तकारणप्रतियोगिकाभावादित्यर्थः, तर्काभावातिरिक्तं संशयकारणञ्च संशयजनको दोषः संशयप्रतिबन्धकाद्यभावश्च। मूले व्याघातावधिरिति व्याघातः अवधिः सीमा यस्याः तथाभूता, व्याघातप्रतिबध्येति यावत्। अतएवोक्तमुपाध्यायैः "यावदाशङ्कं तर्कानुसरणात् यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः" इति। यत्तर्कपूर्वं तद्विघटकशङ्कायास्तर्काभावेतरसकलकारणसम्पत्तिः तत्तर्कपूर्वमेव तर्कान्तरापेक्षा यत्तर्कपूर्वे तर्काभावातिरिक्तकारणप्रयोगिकाभावरूपव्याघातेन शङ्कैव नावतरति तत्र तर्कं तर्कं विनैव व्याप्तिग्रह इति उपाध्यायसन्दर्भस्य समुदिततात्पर्य्यम्। कृत्स्नकारणं विना कार्य्योत्पत्तौ तदर्थं भोजनादौ प्रवृत्तिर्न स्यादित्याह, कृत्स्नकारणं विनेति गृहीतान्वयव्यतिरेकं हेतुं विनेत्यर्थः। परप्रतिपत्त्यर्थञ्चेति परकीयज्ञानार्थञ्चेत्यर्थः। एवञ्चेति तर्कस्य शङ्कानिवर्त्तकत्वे चेत्यर्थः, अप्रयोजकः अननुमापक इत्यर्थः, यावद्वाव्यतिरेकित्वमिति विपक्षस्य विपक्षे हेतोः अव्यतिरेकित्वं सत्त्वं शतांशे-

च उपाधिशङ्काधीना। तदुक्तम् "अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः। तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा" इति॥ अन्ये केचन हेतवः परप्रयुक्तानां व्याप्तीनामुपजीवका आश्रयाः, तथाहि उपाध्यवच्छिन्नहेतुनिष्ठा व्याप्तिः हेतुतावच्छेदकावच्छिन्नहेतुवृत्तितया ज्ञायते, अत एव उप समीपवर्त्तिनि स्वसमानाधिकरणे स्वधर्मं व्याप्तिम् आदधाति बोधयतीति उपाधिशब्दो जवाकुसुमादिसाधारणः, तैः सोपाधिभिर्दृष्टैरपि पक्षे व्यापकांशस्यावधारणा निश्चयो नेष्यते साधारणधर्मेण साध्यसंशयजननादित्यर्थः॥ ७॥

---

नापि यावच्छङ्कते अनुत्कटापि शङ्का यावत् स्यात् तावत् गमनिकावधं गमकत्वमानर्थं कुत इति समुदितार्थः। नन्वेतेन सन्दिग्धानैकान्तिकस्य अप्रयोजकत्वमुक्तं न तु सन्दिग्धोपाधेरित्यसङ्गतिरित्यत आह व्यभिचारशङ्का चेति, तथाच व्यभिचारसंशयस्याप्रयोजकत्वकथनेन तत्कारणीभूतस्य उपाधिसंशयस्याप्रयोजकत्वमर्थवशसम्पन्नमिति भावः। अत्र वृद्धसम्मतिमाह तदुक्तमिति, केचन हेतव इति सोपाधयो हेतव इत्यर्थः, परप्रयुक्तानाम् उपाधिप्रयुक्तानामित्यर्थः। तदेव स्फुटयति तथाहीत्यादि, हेतुतावच्छेदकावच्छिन्नहेतुवृत्तितया ज्ञायत इति, एतेन यादृशधर्मावच्छिन्ने हेतौ उपाधिमत्त्वं तादृशधर्मावच्छिन्ने हेतौ उपाध्यवच्छिन्नहेतुनिष्ठव्याप्तिर्ज्ञायते न स्वातन्त्र्येण तत्र व्याप्तिरपि किन्तु व्यभिचारित्वमप्येव तथा हि यादृशयादृशधर्मावच्छिन्ने उपाधिमत्त्वं तादृशतादृशधर्मावच्छिन्ने व्यभिचारित्वं इत्युपाधेः व्यभिचारव्याप्यत्वं सूचितं, तथाच व्याप्यसंशयस्य व्यापकसंशयं प्रति पृथक् कारणत्वात् व्यभिचारसंशयस्य उपाधिसंशयाधीनत्वं सिद्धमिति न प्रकृते काचिदसङ्गतिरिति विभावनीयम्। एतन्मते साध्यसमव्यापकस्य उपाधित्वं तेन सर्वत्र व्यभिचारिण्यपि हेतावुपाध्यवच्छिन्नव्याप्तिसम्भवः, विषमव्यापकस्योपाधित्वव्यवहारो व्यभिचारोन्नायकत्वसाम्येन गौण्या समर्थनीय इति। अत एवेति उपाधेः स्वधर्मव्याप्त्यारोपकत्वादेवेत्यर्थः, स्वधर्मव्याप्तिं स्वावच्छिन्नव्याप्तिं, बोधयति अन्यधर्ममात्रावच्छिन्नत्वभ्रमतया बोधयति। जवाकुसुमादिसाधारण इति, तथाच यस्य धर्मोऽन्यत्र भासते स एवोपाधिपदवाच्यः यथा जवाकुसुमधर्मो लौहित्यस्य स्फटिके भासनात् जवाकुसुमं स्फटिके उपाधिः, तथा यन्निष्ठा व्याप्तिः साधनत्वाभिमते भासते स्वधर्मस्तत्र हेतावुपाधि

ननूपमानमीश्वरे बाधकं स्यात्, अत्रोपमानस्यातिरिक्तप्रमाणस्या-नभ्युपगमात् न बाधकमिति वैशेषिकादयः। तत्र सादृश्यस्य पदार्था-न्तरस्य ग्राहकमुपमानमिति केचित्, सादृश्यं न द्रव्यं गुणः कर्म वा गुणसमवेतत्वात्, न सामान्यं सप्रतियोगिकत्वात् सामान्यादिवृत्ति-त्वाच्च, नाभावः सप्रतियोगिकत्वेनाप्रत्ययात्। तच्च न प्रत्यक्षगम्य-मिन्द्रियपातमात्रेणाप्रतीतेः। नापि प्रतियोगिज्ञानसहकृतमिन्द्रियं ग्राहकमिति वाच्यं, गोसदृशो गवय इति ज्ञानानन्तरं सा गौर्गवय-सदृशीत्यसन्निकृष्टगोविशेष्यकग्रहस्याप्रत्यक्षत्वात्, नाप्यनुमानगम्यं लिङ्गप्रतिसन्धानेऽपि ज्ञायमानत्वात्, न शब्दगम्यं तस्यासार्वत्रिक-त्वादिति तत्राह,—

---

रिति उपाधिपदस्यान्वर्थत्वं प्रतिपादितमिति भावः। ननु हेतोः सोपाधित्वदशायामपि यदि व्याप्तिग्रहस्तदा पक्षे ताद्दशहेतुमत्त्वग्रहानन्तरं कथं न साध्यानुमितिरित्यत आह, हेतोः सोपाधिभिद्दूषैरपीति, तथाच व्यभिचारित्वसम्बन्धेन उपाधिविशिष्टहेतोः साध्य-व्यापकोपाधेर्व्यभिचरितत्वनिश्चये व्याप्यस्य साध्यस्यापि व्यभिचारनिश्चयात् न साध्यानु-मितिः, किन्तु साध्यसंशय एव, एतदेवोक्तं साधारणधर्मेणेत्यादि। न च साध्यव्यभि-चारज्ञानस्य साध्याभावसहचरितत्वज्ञानरूपत्वेऽपि साध्यसहचारज्ञानात्मकत्वात् कथं साधारणधर्मज्ञानेन साध्यसंशय इति वाच्यम्। एतन्मते साध्यसहचरितत्वे सति साध्या-भावसहचरितत्वस्य व्यभिचारपदार्थत्वात्॥ ७॥

उपमानस्यैव पदार्थसाधकत्वम् इत्यभिमानेन शङ्कते नन्वित्यादिना, बाधकमिति, तथाच ईश्वरे कस्यचित् सादृश्याभावात् न पदार्थत्वमिति भावः। प्रयोगस्तु ईश्वरेति पदं न किञ्चिदर्थवाचकं किञ्चित्सदृशावाचकत्वादित्येवं रूपः। अत्र वैशेषिकमताभान-माह अत्रेत्यादिना वैशेषिकादय इत्यन्तेन, न बाधकत्वमितीति तथाच उपमानस्य अनु-मानगतार्थत्वेन अनुमानातिरिक्तप्रमाणत्वाभावात् नेश्वरबाधकत्वमिति भावः। सादृश्य-मतिरिक्तपदार्थः तत्साधकमेवोपमानं प्रमाणान्तरमिति मीमांसकमतमुत्थापयति तत्रे-त्यादिना केचिदित्यन्तेन, सादृश्यस्य पदार्थान्तरत्वे युक्तिमाह सादृश्यमिति। सप्रति-योगिकत्वादिति समभिव्याहारापेक्षग्रहकत्वादिति यावत्। सप्रति-

परस्परविरोधे हि न प्रकारान्तरस्थितिः।
नैकतापि विरुद्धानामुक्तिमात्रविरोधतः॥ ८॥

न प्रकारान्तरस्थितिः न नोभयात्मकत्वं, हि यतः परस्परविरोधात्, नैकतापि न भावाभावात्मकत्वमपि, विरुद्धानामिति हेतुगर्भविशेषणं परस्परविरोधिरूपत्वात्। विरोधमेव प्रतिपादयति उक्तिमात्रविरोधतः। नाभाव इत्युक्ते च भावत्वप्रतीतेः कथमभावता, न भावइत्युक्ते चाभावत्वप्रतीतेर्न भावत्वम्। अयमभिप्रायः सादृश्यं भावोऽभावोवा उभयकोट्यतिरिक्तस्याप्रसिद्धेः, अभावत्वे सप्तमपदार्थत्वं भावत्वे च गुणवत्त्वे द्रव्यत्वं निर्गुणत्वे सामान्यवत्त्वे च गुणान्यत्वे कर्मत्वं तदन्यत्वे गुणत्वं निर्गुणनिःसामान्यभावत्वेऽसम-

---

योगित्वेनाप्रत्ययादिति विलक्षणप्रतियोगितानिरूपितानुयोगित्वेन नञा प्रतीत-विषयत्वादित्यर्थः। प्रतियोगिज्ञानसापेक्षत्वमिति सम्बन्धिज्ञानसापेक्षत्वमित्यर्थः। अप्रत्यक्ष-त्वादिति तथाच गवयधर्मिकगोसादृश्यज्ञानस्य उपमानफलत्वाभावेऽपि गोप्रतियोगिक-गवयनिष्ठसादृश्यज्ञानकरणक-गवयप्रतियोगिकगोनिष्ठसादृश्यज्ञानस्य असन्निकृष्टगोविष-यत्वात् उपमानफलत्वमवश्यमङ्गीकर्त्तव्यमिति भावः। तदाहेति वैशेषिक इति शेषः। भावाभावातिरिक्तपदार्थस्याप्रसिद्धत्वात् सादृश्यस्य न भावभिन्नत्वे सति अभाव-भिन्नत्वं, न वा भावाभावात्मकत्वम्, अपि तु भावाभावान्यतरत्वमेवेति सिद्धान्तं मनसि-कृत्याह, परस्परविरोधे हीति, हि यतः परस्परविरोधे सति भावभिन्नत्वाभावभिन्नत्वयोः मिथः सहानवस्थानविरोधे सति न प्रकारान्तरस्थितिः न प्रकारान्तरस्य भावाभावाति-रिक्तपदार्थस्य स्थितिः सम्भवः। सादृश्यस्य भावाभावात्मकत्वमपि न सम्भवतीत्याह नैकतापीति, विरुद्धानामिति मिथोविरुद्धानामित्यर्थः, अत्र हेतुमाह उक्तिमात्रेति, इति यथाश्रुतकारिकार्थः। व्याख्यायां नोभयात्मकत्वमिति उभाभ्यामन्यत्वमित्यर्थः भावभिन्नत्वे सति अभावभिन्नत्वमिति यावत्, परस्परविरोधादिति परस्पराभावव्याप्यत्वादित्यर्थः, तथाच भावभिन्नत्वस्य अभावभिन्नत्वाभावव्याप्यत्वम्, अभावभिन्नत्वस्य भावभिन्नत्वाभावव्याप्यत्वं न तु भावभिन्नत्वाभावभिन्नत्वयोः मिथः सामानाधिकरण्यमिति भावः। परस्परविरोधे

वेतत्वे च समवायत्वं समवेतत्वे च अनेकाश्रितत्वे सामान्यत्वं एकाश्रितत्वे विशेषत्वम्। एवं शक्ति-संख्यादयोऽपि पदार्था निराकार्याः॥ ८॥

ननु भवतु सादृश्यं समानधर्मएव तद्ग्राहकमेवोपमानं मानान्तरं स्यादित्यत आह,—

साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम्॥ ९॥

अयं गोविसदृश इति ज्ञानानन्तरं सा गौरेतद्विसदृशीति धीः प्रमाणान्तरादेवास्तु। अथैतस्य तद्वैधर्म्यं तस्मिन्नेतद्वैधर्म्यं विनाऽनुपपन्नमित्यर्थापत्तिरेवेति, गोसादृश्यं गवयस्य गोर्गवयसादृश्यं विनाऽनुपपन्नमित्यर्थापत्तिरेवेति न मानान्तरं सादृश्यग्राहकं मन्तव्यमिति॥ ९॥

---

रूपत्वादिति भावत्वाभावत्वयोः मिथो विरोधित्वादित्यर्थः। तथाच सादृश्यस्यातिरिक्तपदार्थत्वाभावात् न तद्ग्राहकस्य उपमानस्य प्रमाणान्तरत्वमिति भावः। एवमिति उक्तरीत्येत्यर्थः। शक्ति-संख्यादयोऽपीति आदिना पृथक्त्वस्य परिग्रहः, एतत् दृष्टान्तविषयोक्तं, यथा मीमांसकैः अतिरिक्तपदार्थत्वेनाभ्युपगतानामपि शक्ति-संख्या-पृथक्त्वानां नैयायिकादिमते सप्तपदार्थान्तर्गतत्वं तथा सादृश्यस्यापीति समुदिततात्पर्यम्। न च संख्या-पृथक्त्वयोरतिरिक्तपदार्थत्वाभावे गुणस्य निर्गुणत्वात् कथम् एकं रूपं रूपं रसात् पृथक् इतिप्रतीतेः प्रामाण्यमिति वाच्यम्। गुणादिनिष्ठसंख्या-पृथक्त्वयोः धीविशेषविषयत्वरूपत्वात् इति न काचिदनुपपत्तिः॥ ८॥

नन्वतिरिक्तपदार्थग्राहकत्वेन उपमानस्य प्रमाणान्तरत्वासिद्धावपि क्लृप्तपदार्थग्राहकत्वेनैव उपमानस्य प्रमाणान्तरत्वं स्यादित्याशङ्कते नन्वित्यादिना, साधर्म्यग्राहकस्य प्रमाणान्तरत्वे तुल्ययुक्त्या वैधर्म्यग्राहकस्यापि प्रमाणान्तरत्वं स्यादिति प्रतिबन्दिमुखेन वैशेषिकसम्मतं दूषयति साधर्म्यमिवेति, साधर्म्यमिव साधर्म्यग्राहकमानान्तरमिव, वैधर्म्यं वैधर्म्यग्राहकं, मानमेवं प्रसज्यते एवं मानान्तरं स्यादित्यर्थः। अर्थापत्तिरसावित्यादि,

वैशेषिकादिभिरुपमाने दूषिते नैयायिकः प्राह,—

**सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह।**
**प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः॥ १०॥**

फलमित्यनन्तरं इतीत्यध्याहार्य्यं, संज्ञाया गवयादिसंज्ञायाः संज्ञिना गवयत्वादिविशिष्टेन सह, सम्बन्धस्य शक्तेः, परिच्छेदः निश्चयः, उपमानस्य मानान्तरस्य फलमुपमितिः, प्रत्यक्षादेरसाध्यत्वात् इन्द्रिय-लिङ्ग-शब्दानामसामर्थ्यात्॥ १०॥

ननु गोसदृशोगवयपदवाच्य इत्यतिदेशवाक्यादेव शक्तिधीरस्तु, गवयत्वविशिष्टोधर्मी गवयपदवाच्योगोसदृशत्वादित्यनुमानाद्वास्तु तत्राह,—

**सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः।**
**समयोदुर्ग्रहः पूर्वं शब्देनानुमयापि वा॥ ११॥**

समयः गवयत्वादिजातिपुरस्कारेण शक्तिरूपसम्बन्धः, स च

---

वैधर्म्यंग्राहकमानस्य चार्थापत्तित्वम् इति व्यक्तम्, इति सुगडं चेत्, प्रकृतं न किमिति प्रकृतस्य साधर्म्यग्राहकमानस्य कथं नार्थापत्तित्वमित्यर्थः॥ ८॥

सादृश्यज्ञानं नोपमानफलमपि तु शक्तिनिर्णय एव इति नैयायिकसिद्धान्तमाह, वैशेषिकादिभिरिति। इन्द्रिय-लिङ्ग-शब्दानामसामर्थ्यादिति, तथाच शक्तिपरिच्छेदस्य इन्द्रियजन्यप्रत्यक्षरूपत्वे अश्रुतातिदेशवाक्यस्यापि शक्तिग्रहप्रसङ्गः अतिदेशवाक्यार्थज्ञानस्य प्रत्यक्षे अप्रत्यहेतुत्वात् अत एव सादृश्यमितिविशेषे अतिदेशवाक्यार्थज्ञानमवश्यमपेक्षणीयं सादृश्यमित्यनन्तरम् अकामेनाप्यङ्गीकार्य्यं तादृशमित्यन्तरकारणञ्च उपमानम् अत उपमानस्य प्रमाणान्तरत्वं सिद्धमिति भावः। लिङ्ग-शब्दयोरसामर्थ्यञ्च अनुपदं वक्ष्यते इति॥ १०॥

लिङ्ग-शब्दयोः सामर्थ्यमाशङ्क्य निरस्यति नन्वित्यादिना, मूले सादृश्यस्यानिमित्तत्वादिति सादृश्यस्य अनिमित्तत्वात् अप्रवृत्तिनिमित्तत्वात् निमित्तस्य प्रवृत्तिनिमित्तस्य गवयत्वस्य अप्रतीतितः अग्रहात् पूर्वं समयः गवयत्वविशिष्टे गवयपदस्य शक्तिरूपसम्बन्धः शब्देन

दुर्ग्रहः, शब्दादनुमानाद्वा न सम्भवति, गवयत्वस्य तेन पुंसा अप्रतीतत्वात् । न च सादृश्यमेव प्रवृत्तिनिमित्ततया स्फुरतां, तस्य गुरुत्वेनाप्रवृत्तिनिमित्तत्वात् ॥ ११ ॥

ननु प्रथमतो गवयत्वस्याप्रतीतत्वेऽपि यदा गवयत्वं प्रत्यक्षं तदा गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्याल्लक्षणया गवयत्वपरात् तेन रूपेण शक्तिधीरस्तु तत्राह,—

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्य्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥

गोसादृश्यसामानाधिकरण्येन गवयपदवाच्यत्वविषयकज्ञानजनकतया शब्दस्य गवयत्वादिना शक्तिबोधे नाकाङ्क्षा, अन्वयस्य पर्य्यवसानात्, यत्र पदार्था एवान्वयविधुराः केनापि रूपेणान्वयायोग्याः तत्र तदाक्षिप्तेन तेन लक्षणीयार्थेन सङ्गतिरन्वयः, यथा गङ्गायां घोष इत्यादौ ॥

---

अतिदेशवाक्येन अनुमानेन वा दुर्ग्रहः ग्रहीतुमशक्यः इति कारिकार्थः । टीकायां शब्दादनुमानाद्वेति, तथाच गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यात् गोसादृश्यविशिष्टे गवयपदवाच्यत्वग्रहेऽपि शक्यतावच्छेदकीभूतगवयत्वविशिष्टे तादृशवाक्यात् गवयपदवाच्यत्वग्रहासम्भवात् शब्दस्यासामर्थ्यं, गवयत्वविशिष्टे गवयपदवाच्यत्वानुमितेः पूर्वं गवयत्वविशिष्टे परामर्शस्यापेक्षणीयत्वात् गवयत्वविशिष्टानुपस्थितौ तदसम्भवात् अनुमानस्यासामर्थ्यमिति भावः ॥ ११ ॥

ननु यदा गवयत्वविशिष्टपिण्डप्रत्यक्षं तदा लाघवप्रतिसन्धानेन गवयत्वं प्रवृत्तिनिमित्तत्वनिश्चयेन तत्रातिदेशवाक्यतात्पर्य्यनिश्चयात् तादृशवाक्यघटकगोसदृशपदलक्षणया गवयत्वविशिष्टे शक्तिग्रहः सम्भवतीति कथमुपमानस्य प्रमाणान्तरत्वमित्याशङ्कते नन्वित्यादिना गवयत्वपरादिति गवयत्वतात्पर्य्यकसदृशपदघटितादित्यर्थः, अत्र सदृशपदमेव गवयत्वलक्षकं न तु गोसदृशपदं, तस्य वाक्यत्वात् वाक्ये लक्षणाविरहात् गोपदन्तु तात्पर्य्यग्राहकमिति हृदयम् । श्रुतान्वयादिति श्रुतान्वये पर्य्यवसानात्, अनाकाङ्क्षम् अश्रुतान्वये आकाङ्क्षा-

ननु गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादिति सामान्यतोदृष्टमनुमानमितरप्रवृत्तिनिमित्तकत्वबाधे गवयत्वस्य प्रवृत्तिनिमित्तत्वमवगाहतामिति चेन्न, व्यापकतावच्छेदकरूपेणैवानुमितेर्व्यापकविषयकत्वात्। गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वादिति व्यतिरेकि च साध्याप्रसिद्ध्या न सम्भवति, व्यतिरेकव्याप्तप्रतिसन्धानेऽपि गवयत्वाश्रयो गवयपदवाच्य इति धियोऽनुभवसिद्धत्वाच्च उपमानं प्रमाणान्तरम्। एवं धिक्करभमतिदीर्घग्रीवमतिकठोरकण्टकाशिनमपसदं पशूनामित्यादिवाक्यार्थज्ञानानन्तरं तादृशपिण्डदर्शने करभपदवाच्यताग्रहोऽप्युपमानादेवेति। उपमानन्तु शक्तिमात्रपरिच्छेदकतया नेश्वरे बाधकमिति भावः॥ १२॥

---

रचितं वाक्यं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यं न भवेत् इच्छति न तदर्थं बोधयति इति कारिकापूर्वार्द्धस्यार्थः। टीकायां गोसादृश्यसामानाधिकरण्येनेति सामानाधिकरण्यपदेन गोसादृश्यस्य उपलक्षणत्वं न तु प्रवृत्तिनिमित्तत्वमिति सूचितम्। अनवसया उपलक्षणतया इत्यर्थः, तथाच गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकशाब्दबोधस्यैव गवयत्वविशिष्टे गवयपदवाच्यत्वविषयकबोधतात्पर्यग्राहकत्वम् अन्यथा अवश्यमभ्युपेयं, तथाच पूर्वं तादृशबोधाभावे तात्पर्यग्रह एव न सम्भवतीति भावः। ग्रन्थस्य प्रागुक्तातिदेशवाक्यस्य, नाकाङ्क्षति, प्रकृततात्पर्यविषयान्वयबोधत्वस्य साकाङ्क्षजन्यत्वादिति भावः। ननु तर्हि कुत्र साकाङ्क्षं पदम् अननुभावकम् इत्यत आह मूले पदार्थान्वयवैधुर्यादिति, अस्यैव विवरणं टीकायां यत्र पदार्था एवेति। अन्वयदृष्टान्ताभावेनान्वयव्याप्तिग्रहासम्भवात् व्यतिरेकि चेति व्यतिरेकिव्याप्तिज्ञानं चेत्यर्थः, साध्याप्रसिद्ध्या साध्यानुपस्थित्या, न सम्भवतीति, ननु यत्पदं यदितराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकं तत् तत्प्रवृत्तिनिमित्तकम् इति सामान्यव्याप्तिबलेन गवयत्वेतराप्रवृत्तिनिमित्तकत्वविशिष्टसप्रवृत्तिनिमित्तकत्वरूपविशेषहेतुमत्तया पक्षधर्मताज्ञानात् अप्रसिद्धमपि गवयत्वप्रवृत्तिनिमित्तकत्वमनुमितौ विधेयतया भासते तत्पदघटितसामान्यव्याप्त्या अनुमाने विशिष्य साध्यप्रसिद्धेरनङ्गत्वादित्यत आह व्यतिरेकव्याप्तप्रतिसन्धानेऽपीति

शब्दस्तु नेश्वरे बाधकत्वेन शङ्कनीयः अनुमानानतिरेकात् इति वैशेषिकाः, पदश्रवणानन्तरं पदार्थस्मरणे एते पदार्थाः परस्परं संसर्गवन्तः आकाङ्क्षा-योग्यतासत्तिमत्पदस्मारितत्वात् दण्डेन

---

व्याप्तिसामान्यावच्छेदेऽपीत्यर्थः । अतएव क्वचिदप्यन्वयेनानुमानेन उपमानस्य न गतार्थत्वं, व्याप्तिसामान्यावच्छेदे अनुमानासम्भवात् । सादृश्यज्ञानमिव असाधारणधर्मदर्शनमप्युपमानमित्याह धिक्करभमिति, अपसदमिति अपकृष्टमित्यर्थः । ताद्रूप्यदर्शने दीर्घग्रीवादियुक्तशरीरदर्शने, करभपदेति उष्ट्रविशिष्ट इत्यादिः, उपसंहरति उपमानमिति, शक्तिमात्रेति मात्रपदेन उपमानस्य पदार्थसाधकत्वव्यवच्छेदः, तथाच ईश्वरस्य किञ्चित्सादृश्याभावेऽपि उपमानस्य नेश्वरबाधकत्वमिति भावः ॥ १२ ॥

ननु उपमानस्य शक्तिमात्रनिर्णायकत्वेन ईश्वराबाधकत्वेऽपि शब्दस्य ईश्वरबाधकत्वं स्यादित्याशङ्कायां वैशेषिकमतावलम्बनेनाह शब्दस्त्विति, अनुमानानतिरेकादिति, यद्यपि शब्दस्य ईश्वराबाधकत्वे अनुमानानतिरिक्तत्वं न तन्त्रम् अनुमानात्मकस्यैव ईश्वरबाधकत्वसम्भवात् तथापि शब्दानुमानमनाश्रयणीयमित्याशयेन अनुमानस्य ईश्वरबाधकत्वनिरासेनैव अनुमानात्मकशब्दस्य ईश्वरबाधकत्वमपि निरस्तमित्यर्थः । पदार्थस्मरण इति योग्यताज्ञानादीनामप्युपलक्षणम्, अन्यथा योग्यतादीनामभावे पदार्थस्मृतिमात्रात् अन्वयबोधापत्तिः । न च परस्परं संसर्गवन्त इत्यत्र परस्परसंसर्गपदम् अननुगतार्थकत्वात् यदि प्रकृतपदार्थसंसर्गपरम्, एवम् आकाङ्क्षापदस्य तत्तत्पदघटिताकाङ्क्षापरत्वात् यदि प्रकृतपदघटिताकाङ्क्षापरत्वं तर्हि दण्डेन गामभ्याजेति दृष्टान्तासम्भव इति वाच्यम् । तत्तत्पदघटितसामान्यव्याप्तौ तात्पर्यात् । तथाहि यत् यत्सम्बन्धेन यत्पदार्थान्वयबोधजनकरूपवत्त्वे सति तत्सम्बन्धेन तत्पदार्थप्रकारतानिरूपितयत्पदाव्यवहितयत्पदप्रयोज्यबोधीयविशेष्यत्वेन बोधेच्छाविषयत्वं च सति तत्कालीन तद्विशेष्यकतत्सम्बन्धसंसर्गक-तत्पदार्थप्रकारकबोधेच्छोच्चरितेन पदेन तथा तत्पदार्थप्रकारकयत्पदाव्यवहितयत्पदेन तथा स्मारितं भवति तत् तत्पदार्थप्रकारकतत्पदाव्यवहिततत्पदार्थप्रकारकतत्पदप्रयोज्यकतत्कालीनतद्बोधेच्छाविषय-तत्पदाव्यवहिततत्पदार्थीनशाब्दबोधीय-तद्विशेष्यतानिरूपिततत्संसर्गावच्छिन्नप्रकारत्वेन बोधेच्छाविषयतत्पदार्थवत् भवति इत्यनुमानं बोध्यम् । अथ पितृगवीदं तत्पदार्थे तत्संसर्गेण तत्पदार्थवत्त्वरूपयोग्यतानिवेशे सिद्धसाधनं स्यात् तत्र अन्वयप्रयोजकरूपवत्त्वं योग्यत्वं विवक्षितम् । पितृगवीदे प्रथमप्रयत्नघटितं योग्यत्वं,

गामभ्याजेतिपदस्मारितपदार्थवत् इत्यनुमानात् संसर्गसिद्धेः, किं वा एतानि पदानि स्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदत्वात् इत्यनुमानात् तत्सिद्धेः, ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमादित्यवाच,—

---

द्वितीयसत्यन्तदलेनाकाङ्क्षावत्त्वं, द्विशेष्यदलेन तात्पर्य्यवत्त्वम् आसत्तिमत्त्वञ्च सूचितम्। घटेन जलमाहर इत्यादिवाक्यश्रवणानन्तरं जलाहरणं घटकरणकं न वेत्यादिसंशयानुदयवत् घटो जलाहरणकरणं न वेत्यादिसंशयानुदयात् तादृशवाक्यस्य घटधर्मिकजलाहरणकरणत्वबोधेऽपि तात्पर्य्यं मन्तव्यमिति सूचनायैव परस्परं संसर्गवन्त इत्युक्तम्। एवञ्च छिद्रे घटे जलाहरणकरणत्वरूपसाध्याभाववति विशेष्यदलसत्त्वात् द्वितीयसत्यन्तदलस्य च सत्त्वात् व्यभिचारवारणाय प्रथमसत्यन्तदलं, जलाहरणं प्रति छिद्रेतरघटस्यैव करणत्वात् छिद्रघटे स्वरूपयोग्यत्वघटितजलाहरणकरणत्वसाध्याभावात्। पुत्र-पुरुषयोरुभयोः राजसम्बन्धबोधतात्पर्य्येण प्रयुक्तस्य अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामित्यादिवाक्यस्य श्रवणानन्तरं राजसम्बन्धस्य पुत्रे अन्वयबोधानन्तरं पुरुषे राजसम्बन्धबोधे आकाङ्क्षा न जायते तेन वाक्येनान्वयबोधस्य जनितत्वात् तथाच पुरुषे राजसम्बन्धान्वयबोधजनकस्वरूपयोग्यतासत्त्वात् निरुक्ततात्पर्य्यविषयराज-इतिपदाव्यवहितपुरुषपदस्मारितत्वाच्च बोधेच्छारूपाकाङ्क्षाविषयराजसम्बन्धरूपसाध्यस्याभावात् व्यभिचारवारणाय हेतौ द्वितीयसत्यन्तदलं, पुत्रनिष्ठस्य राजसम्बन्धस्य बोधविषयत्वेनाकाङ्क्षितत्वात् पुरुषनिष्ठस्य राजसम्बन्धस्यानाकाङ्क्षितत्वात्। शैत्यवतानयेतिवाक्यात् स्वरूपतात्पर्य्यकात् अग्निकर्मकत्वबोधानुदयस्तात्पर्य्यविरहादेव इति सर्वसिद्धं, तत्राग्निकर्मत्वे तात्पर्य्यविषयशैत्यवत्त्वाधेयत्वसम्बन्धेनाभावात् तात्पर्य्याघटितहेतुसत्त्वात् व्यभिचारवारणाय हेतौ तात्पर्य्यं निवेशितम्। गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ गिरिपदाग्निमत्पदयोः अव्यवधानविरहेण तत्कालीननिरुक्तेच्छाविषयत्वघटितसाध्याप्रसिद्ध्या व्यभिचारवारणाय तत्कालीनतादृशबोधेच्छाविरहितेनेति पदविशेषणम्। इच्छा स्मृतयोरिव पदार्थयोः पदश्रवणानन्तरं बोधस्यानुभवसिद्धतया इच्छा स्मरणकालस्याभाय हेतौ सन्निवेशः। एवञ्च घटमित्यादौ कर्मत्वे आधेयतासम्बन्धेन घटपदार्थान्वयप्रतीतिजनकपदत्वे सति आधेयतासम्बन्धेन तदर्थप्रकारतानिरूपितघटपदार्थाव्यवहितानुवादपदाधीनबोधीयविशेष्यत्वेन तत्कालीन-

अनैकान्तः परिच्छेदे सम्भवे च न निर्णयः ।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥ १३॥

अत्र पदार्थपञ्चकानुमाने संसृष्टा एवेति यदि संसर्गवत्त्वं साध्यते, सम्भावितसंसर्गका इति संसर्गस्वरूपयोग्यत्वं वा, आद्ये पयसा सिञ्चतीत्यादावनैकान्तः, द्वितीये न संसर्गनिर्णयः, अन्वयप्रयोजकरूपवत्त्वरूपयोग्यताया हेतुविशेषणीकृतत्वेन सिद्धसाधनाच्च । द्वितीये

---

बोधेच्छाविषयत्वे च सति तदधीनकर्मत्वविशेष्यकाधेयत्वसंसर्गक घटप्रकारकबोधेच्छाप्रयुक्तघटप्रकारकघटपदाव्यवहिताणुस्वारपदव्यवहितत्वरूपविशेषणेनुसन्धानजात् यत्तत्पदघटितसामान्यव्याप्तिप्रदर्शकत्वात् आसंत्वं घटीयम् इति विशेषतः साध्यसिद्धिरिति फलितम् । एतानि पदानीति, तथाच यत्पदं यत्पदार्थान्वययोग्यतावदर्थतत्पदार्थप्रकारकपदाव्यवहितञ्च सत् तत्पदार्थप्रकारकतत्पदार्थविशेष्यकशाब्दबोधेच्छाप्रयोजकं भवति तत्पदं तत्पदार्थवत्तत्पदार्थबोधपूर्वकं भवतीति सामान्यव्याप्तिरिति भावः । ननु शाब्दबोधपूर्वकत्वसिद्धावपि न तत्पदार्थवत्तत्पदार्थसिद्धिरित्यत आह आनन्तानन्तर्येति प्रकृते पदार्थसंसर्गप्रमानुमितिः, तद्विषयेति तस्य पदार्थसंसर्गप्रमायाः यः संसर्गरूपो विषयः स एव विषयो यस्य तादृशत्वनियमादित्यर्थः ।

परस्परं संसर्गवन्तः इत्यस्य किं परस्परं संसृष्टा एव इति नियमे तात्पर्यं परस्परसंसर्गस्वरूपयोग्यत्वे वा इति विकल्पं मनसिकृत्य वैशेषिकसमाधानं दूषयति, मूले अनैकान्त इति, परिच्छेदे नियमे नियमेन संसर्गवत्त्वसाधने इति यावत् । सम्भवे संसर्गस्वरूपयोग्यत्वसाधने इत्यर्थः, संसर्गस्वरूपयोग्यत्वञ्च संसर्गप्रयोजकरूपवत्त्वं तच्च रूपं पयसा सिञ्चति इत्यत्र अप्रतिबद्धद्रवत्वपञ्चत्वादिकं, घटेन जलमाहर इत्यत्र छिद्रेतरघटत्वादिकम् । टीकायाम् आद्य इति आद्ये नियमेन संसर्गवत्त्वानुमाने इत्यर्थः, अनैकान्त इति यादृशशब्देन कदापि बोधो न जातः तादृशपदत्वसंसर्गरूपसाध्याभाववति तादृशशब्दे आनुपूर्वीतः सत्त्वात् व्यभिचार इति भावः । वर्धमानोपाध्यायैरपि तदेवोक्तं "ययोरेव घटानयनयोः परस्परसंसर्गो न ज्ञातः तेनैव व्यभिचारात्" इति । केचित्तु [illegible]

प्रयोगे आकाङ्क्षा सत्तया इति। आकाङ्क्षा हि समभिव्याहृतपदस्मारितपदार्थजिज्ञासा, घटमित्युक्ते आनय पश्येति, आनयेत्युक्ते घटं पटं वेति जिज्ञासादयः। ननु योग्यतासहितासत्तिरेव हेतुरस्तु, तत्राह योग्यासत्तिरवन्धना इति व्याप्तिशून्या, अयमेति पुत्रोराज्ञः पुरुषोऽपसार्यतामित्यत्र निराकाङ्क्षयोराजपद-पुरुषपदयोर्व्यभिचारात् ॥ १२ ॥

---

समर्थयन्ति। तत्र प्रथमं हेतुं प्रति अप्रतिबद्धद्रवत्वपञ्जलत्वेन हेतुत्वात् करकादिव्यतिरेके संसर्गप्रयोजकस्वरूपयोग्यतादिघटितप्रागुक्तहेतोरसत्त्वेन व्यभिचारासम्भवात्। द्वितीय इति संसर्गस्वरूपयोग्यत्वानुमान इत्यर्थः। न संसर्गनिर्णय इति, तथाच स्वरूपयोग्यत्वसाध्यनिर्णयेऽपि संसर्गानिर्णयात् वादजन्य संसर्गनिर्णयरूपफलस्वलासम्भव इति भावः। स्वरूपयोग्यत्वानुमाने दोषान्तरमाह अन्वयप्रयोजकेत्यादि, सिद्धसाधनादिति अनुमितेः पूर्वं हेतुतावच्छेदकविशिष्टहेतुज्ञानस्य नियतापेक्षणीयत्वादिति भावः। पदार्थानुमाने दोषमाह तृतीये प्रयोग इति पदार्थानुमान इत्यर्थः। एतदुपलक्षणं पदार्थपञ्चकानुमानेऽपि हेतोराकाङ्क्षाघटिततया अयं दोषो द्रष्टव्यः। समर्थेति विद्यमानतया न तु ज्ञानविषयत्वेनेत्यर्थः, तथाच स्वरूपसत्या एव आकाङ्क्षायाः शाब्दबोधहेतुत्वात् अनुमितौ च हेतुनिर्णयस्यापेक्षणीयत्वात् आकाङ्क्षाया स्वरूपसद्धेतुत्वासम्भवेन शब्दस्य प्रमाणान्तरत्वमवश्यमङ्गीकार्यमिति भावः। ननु योग्यतादेः आसत्तेरिव ज्ञानं शाब्दबोधोपयोगि अतः योग्यताविशिष्टासत्तिरेव हेतुरस्तु किम् आकाङ्क्षाया हेतुघटकत्वेनेत्याशङ्क्य नन्वित्यादिना, अयमेनेति न अन्वयं व्याप्तिरूपः सम्बन्धो यस्या सा तथा इत्यर्थः। व्यभिचारादिति तथाच यत्र शाब्दार्थबोधे [illegible] तत्र वाक्यं तदनुसारिपदार्थज्ञानपूर्वकत्वं, शाब्दार्थबोधे शिष्यस्य नाकाङ्क्षा तत्र वक्तुरपि न तात्पर्यम् अनाकाङ्क्षिताभिधानप्रसङ्गात् एवञ्च राजपुरुषान्वये तात्पर्यविरहादेव तादृशपदार्थसंसर्गज्ञानपूर्वकत्वविरहेण व्यभिचार इति भावः। न च तात्पर्यज्ञानस्य हेतुत्वात् तात्पर्यसम्वलितयोग्यासत्तिमत्त्वेन हेतुना पदार्थसंसर्गज्ञानपूर्वकत्वं साधनीयम् इति न व्यभिचार इति वाच्यम्। तथा सति योग्यतादिविशेषणस्य निष्फलत्वेन हेतोर्व्यर्थविशेषणघटितत्वापत्तेः, तात्पर्यं हि तत्पदार्थसंसर्गप्रतीतीच्छयोच्चरितत्वं तच्च तत्पदार्थ

प्राभाकरास्तु ।वेदस्यापौरुषेयतया तत्र वक्तृज्ञानानुमानासम्भवात् शब्दः प्रमाणं, लोके तु आप्तोक्तत्वज्ञानमपेक्षितं, तथाचायं वक्ता स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवान् भ्रमाद्यजन्यवाक्यार्थज्ञानजन्यवाक्यप्रयोक्तृत्वात् इत्यनुमानाद्वक्तृज्ञानावच्छेदकतया, उत्तरकालं वा एते पदार्थाः परस्परं संसृष्टाः वक्तृयथार्थज्ञानविषयत्वात् इत्यनुमानात्, साक्षाद्वाक्यार्थसिद्धेः, क्लृप्तसामर्थ्यात् शब्दात् पुनरन्वयधीरित्यनुवादकोलौकिकः शब्दोन प्रमाणमिति प्राहुस्तत्राह ।

---

वक्तृपदार्थज्ञानपूर्वकत्वनियतमिति तत्तदर्थतात्पर्यकत्वस्य हेतुत्वे इतरवैयर्थ्यम् । वस्तुतस्तु शब्दश्रवणानन्तरोत्पन्नज्ञानोत्तरं शाब्दयामि न त्वनुमिनोमीत्यादिप्रत्यक्षसिद्धानुमितित्वविरुद्धशाब्दत्वजातेरपह्नोतुमशक्यत्वेन तादृशविजातीयप्रमाकरणतया शब्दस्य प्रमाणान्तरत्वमिति ॥ १२ ॥

शब्दमात्रस्य अनुमानेन गतार्थत्वम् इति वैशेषिकमतं निरस्य लौकिकशब्दमात्रस्य अनुवादकत्वेन न प्रमाणत्वमिति प्राभाकरमतमुत्थाप्य निरस्यति प्राभाकरास्त्वित्यादिना, अपौरुषेयतया अपौरुषेयत्वनिश्चयेन, वक्तृज्ञानानुमानासम्भवादिति तथाच वेदे अपौरुषेयत्वनिश्चयरूपबाधनिश्चयात् पौरुषेयत्वनिश्चयरूपवक्तृज्ञानानुमानासम्भवादिति भावः। न च तेषां मते शब्दमात्रस्य नित्यत्वात् कथं लौकिकवाक्यस्य पौरुषेयत्वमिति वाच्यम् । शब्दस्य नित्यत्वेऽपि लौकिकवाक्यस्य आनुपूर्वीविशिष्टत्वरूपाया रचनायाः पौरुषेयत्वात् वेदे तु वक्तुरभावात् आनुपूर्वीमत्त्वस्यापि तत्र नित्यत्वम् इति तेषाम् अभिमानात् । अपेक्षितमिति कारणतयेत्यादिः, तथाचायमित्यादि । न च सामान्यतो वाक्यार्थत्वस्याव्यावर्त्तकतया वाक्यार्थत्वेन वाक्यार्थसिद्धावपि घटमितिवाक्यात् न कर्मत्वं घटीयमित्यादिज्ञानसिद्धिः येन घटमितिवाक्यस्य गृहीतग्राहित्वेनाप्रामाण्यं भवेत् इति वाच्यम् । उक्तानुमानस्य विशेषानुमाने तात्पर्यात् । अनुमानञ्च घटमितिवाक्यवक्ता घटवत्कर्मत्वयथार्थज्ञानवान् भ्रमाद्यजन्यघटप्रकारक-कर्मत्वविशेष्यकज्ञानजन्यघटमितिवाक्यप्रयोक्तृत्वादित्यादिरूपं, भ्रमादीत्यादिपदात् करणापाटवप्रतारणादिपरिग्रहः । भ्रान्तप्रतारकादौ व्यभिचारवारणाय भ्रमाद्यजन्येति वाक्यविशेषणं, शुकादौ

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥

वेदेऽवधारितसामर्थ्याच्छब्दाल्लोकस्थलेऽपि प्रागर्थनिर्णये लिङ्गस्यैवानुवादकत्वं, व्याप्तिस्मृतिविलम्बेनानुमानस्य शब्दापेक्षया विलम्बितधीजनकत्वात् ॥ १४ ॥

नन्वाप्तोक्तत्वस्य संशये व्यतिरेके च शाब्दज्ञानानुत्पत्त्या निर्णयो हेतुर्वाच्यः, आप्तोक्तत्वञ्च प्रकृतवाक्यार्थगोचरयथार्थधीजन्यत्वमिति, वाक्यार्थधीः प्रथमतोऽनुमानादेव वाच्या इत्यत्राह,—

---

व्यभिचारवारणाय घटप्रकारककर्मत्वज्ञानजन्येति विशेषणम्। न च घटमितिवाक्यस्य घटप्रकारककर्मत्वविशेष्यकज्ञानजन्यत्वासिद्ध्या हेत्वसिद्धिरिति वाच्यम्। बुबोधयिषया वाक्यप्रयोगं प्रति वाक्यार्थज्ञानस्य हेतुतया बुबोधयिषाप्रयुक्तघटमितिवाक्यस्य वाक्यार्थज्ञानजन्यत्वात्। वक्तृज्ञानावच्छेदकतयेति विषयतासम्बन्धेन वक्तृज्ञानविशेषणतयेत्यर्थः, अस्य 'वाक्यार्थसिद्धेरित्यनेनान्वयः। परम्परया वाक्यार्थसिद्धिमुक्त्वा साक्षात् वाक्यार्थसिद्धिमाह एते पदार्था इति, तथाचायं प्रयोगः कर्मत्वं घटसंसृष्टं वक्तृयथार्थघटज्ञानविशेष्यत्वादिति। स्वसामर्थ्यादिति वैदिकशब्दस्य वक्तृप्रकारकत्वाप्रयुक्तत्वादित्यर्थः। अनुवादकः गृहीतग्राहीत्यर्थः, न प्रमाणमिति तेषां मते अगृहीतग्राहित्वस्य प्रमाणलक्षणत्वादिति भावः। मूले निर्णीतशक्तेरित्यादि निर्णीतशक्तेः निर्णीतयोग्यताकाङ्क्षादिमत्त्वरूपसामर्थ्यादित्यर्थः, प्रागेव अनुमानात् पूर्वमेव, निर्णये शाब्दात्मकनिर्णये, अनुवादिता गृहीतग्राहित्वम्। व्याख्यायां विलम्बितधीजनकत्वादिति तथाच तुल्ययुक्त्या वेदे यादृशी सामग्री तादृश्येव लोके न त्वपेक्षणीयान्तरमस्ति इति वैदिकशब्दस्येव लौकिकशब्दस्यापि ज्ञानाभावेन न आप्तोक्तत्वनिश्चयस्य हेतुत्वं येन वक्तृयथार्थज्ञानानुमानमपेक्षणीयं स्यादिति भावः ॥ १४ ॥

यस्य संशये व्यतिरेकनिश्चये च यदनुत्पादः तन्निश्चयस्तत्र कारणम् इति नियममभिप्रेत्य आप्तोक्तत्वनिश्चयस्य अन्वयबोधहेतुत्वं प्राभाकरः पुनः शङ्कते नन्वित्यादिना, निर्णयो हेतुरिति, तथाच अनाप्तोक्तत्वनिश्चयाभावस्य हेतुत्वकल्पनमपेक्ष्य आप्तोक्तत्वनिश्चयस्य

व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत्कुतः ॥१५॥

आप्तोक्तत्वनिश्चयस्य हेतुत्वे मानाभावः, बाधकप्रमाविरहरूप-योग्यताज्ञानविलम्बादेवायोग्येऽन्वयधीविलम्बसम्भवात्, अन्यथा वेदेऽपि अपौरुषेयत्वधीर्हेतुरस्तु, तथाच तत्रापि अमी वैदिका अर्थाः अन्विताः परस्परं संसृष्टाः व्यस्तपुंदूषणाशङ्कैः पदैः स्मारितत्वात् इत्यनुमानात् संसर्गे निर्णीते तत् अनुवादकत्वं वेदस्यापि न कुतः ।

---

हेतुत्वे लाघवमिति भावः । इत्यवाह इत्यत्र प्रतिबन्दिमाहेत्यर्थः । व्यस्तपुंदूषणेति व्यस्ता निरस्ता पुंदूषणानां भ्रमप्रमादादिरूपपुरुषदोषाणाम् आशङ्का यैस्तैरित्यर्थः । आप्तोक्तत्वनिश्चयहेतुत्वस्य सप्रमाणत्वं प्रतिबध्नन् निराममसम्भवादादौ आप्तोक्तत्वनिश्चय-हेतुतायां प्रमाणाभावं दर्शयति आप्तोक्तत्वनिश्चयस्येति । अन्वनाप्तोक्तत्वनिश्चये कथं न शाब्दबोध इत्यत आह बाधकप्रमाविरहेति, अयोग्ये अनाप्तोक्तत्वग्रहे, तथाच यत्र अनाप्तो-क्तत्वग्रहः तत्र न बाधकप्रमाविरहः अपि तु बाधनिश्चयात्मकत्वमेव सुतरां तत्र बाधक-प्रमाविरहरूपयोग्यताज्ञानविलम्बादेव अन्वयधीविलम्ब इति भावः । अन्यथा आप्तोक्त-त्वग्रहस्य 'लौकिकवाक्यार्थबोधहेतुत्वे, वेदेऽपीति अपौरुषेयत्वधीरस्तु नित्यत्वेन दोषवत्-पुरुषाप्रणीतत्वधीरित्यर्थः, मीमांसकमते शब्दमात्रस्य नित्यत्वेऽपि लौकिकवाक्यानुपूर्वी न नित्या वेदानुपूर्वी च नित्येति वेदस्य नित्यत्वमन्यवाक्यस्यानित्यत्वमिति भावः । तदर्थमिति दोषवत्पुरुषाप्रणीतत्वनिश्चयस्य हेतुतया अपौरुषेयत्वं चेत्यर्थः । अनुवादकत्वमिति मूलस्थ-तत्पदस्य विवरणम् । न च लौकिकवाक्ये यथार्थवाक्यार्थज्ञानजन्यत्वज्ञानस्य शाब्दबोधहेतु-तया यथार्थवाक्यार्थज्ञानजन्यत्वस्य वाक्यार्थगर्भतया लौकिकवाक्यस्य अनुवादकत्वं स्यात् वैदिकवाक्ये दोषवत्पुरुषाप्रणीतत्वनिश्चयस्य हेतुत्वेऽपि तस्य वाक्यार्थागर्भतया शाब्द-बोधात् पूर्वं वाक्यार्थज्ञानस्यानावश्यकत्वात् कथं वेदस्य अनुवादकत्वमिति वाच्यम् । वेदस्य नित्यत्वेऽपि अध्ययनपरम्पराधीन अध्यापकपरम्परोच्चारितत्वग्रहे वेदादपि न शाब्द-बोध इति वेदेऽपि यथार्थवाक्यार्थधीमत्पुरुषोच्चारितत्वग्रहस्य लौकिकवाक्यतुल्यतया वेदार्थ-बोधहेतुत्वात् वेदस्याप्यनुवादकतापत्तेः । यदि च वेदस्य प्रामाण्यानुरोधेन मानाभावेन [illegible]

यत्तु पदं न करणं किन्तु पदार्थ एव अतएव पदार्थकरणक-वाक्यार्थज्ञानात् कविकाव्यादिकं, द्वारमित्यत्र द्वारोपस्थितावपि पदार्थनिष्ठाकाङ्क्षाविरहेणान्वयाबोधः, शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति न्यायात्। अतएव पदार्थानामवच्छेदकत्वं पदजन्योपस्थितिं विना पदार्थान्वयाबोधात्। तदुक्तम् "प्राथम्यादभिधातृत्वात् तात्पर्य्योपगमादपि। पदानामेव सा शक्तिर्वरमभ्युपगम्यताम्॥" अभिधातृत्वात् पदार्थोपस्थापकत्वात् इति गुरुमतमपास्तं, पदानामित्यत्र आप्तानामिति प्रक्षेपेणापि आप्तोक्तत्वस्यावच्छेदकत्वा-

---

यथार्थवाक्यार्थधीजनकत्वघटितो न शाब्दबोधहेतुरिति लौकिकशब्दोऽपि प्रमाणम्। न च वाक्यार्थयथार्थबोधेच्छोच्चरितत्वरूपतात्पर्यघटकस्य शाब्दबोधहेतुतया तात्पर्यघटकवाक्यार्थज्ञानस्य पूर्वं सिद्धत्वात् शब्दस्यानुवादकत्वमिति वाच्यम्। तत्पदार्थप्रकारकतत्पदार्थविशेष्यकबोधेच्छोच्चरितत्वमेव तात्पर्यं न तु तत्पदार्थवत्तत्पदार्थविषयकबोधेच्छोच्चरितत्वम् इति तात्पर्यघटकस्य वाक्यार्थविषयकत्वाभावात्।

पदार्थस्य अन्वयबोधकरणतावादिनो मतस्य मतमुत्थाप्य निरस्यति यत्त्विति, अतएवेति पदार्थस्य करणत्वादेवेत्यर्थः, कविकाव्यादिकमिति, तथाच कवयः अपूर्ववाक्यार्थम् अनुभूयैव अभिनवकाव्यं रचयन्ति तादृशापूर्ववाक्यार्थज्ञानम् असन्निकृष्टविषयकत्वात् न प्रत्यक्षं, व्याप्तिज्ञानापूर्वकत्वात् नानुमितिः, शब्दाभावात् न शाब्दबोधः, परन्तु अन्वयबोध एव तादृशबोधे निराकाङ्क्षोपस्थिताः पदार्था एव हेतवः न तु पदानि इति न शब्दः प्रमाणान्तरमिति भावः। क्वचित् पदार्थोपस्थित्यर्थं पदस्यापेक्षणेऽपि पदार्थोपस्थित्या पदमन्यथासिद्धम्, कथमन्यथा श्वेतरूपदर्शनात् हेषाशब्दश्रवणात् खुरनिक्षेपशब्दश्रवणात् शब्दं विनापि श्वेतोऽश्वो धावतीति धीरुत्पद्यते। ननु पदस्याकरणत्वे यत्र द्वारमित्युक्तं तत्र पिधानपदोपस्थितिं विना कथं नान्वयबोध इत्यत आह द्वारमित्यत्रेति द्वारमितिपदजन्यद्वारपदार्थोपस्थितावपीत्यर्थः, पदार्थनिष्ठाकाङ्क्षाविरहेणेति तथाच पदोपस्थितपदार्थस्य पदोपस्थितपदार्थान्तरेणान्वयबोधः न तु प्रकारान्तरेणोपस्थितपदार्थेन इति नियम इति भावः। नियमं प्रमाणयति शाब्दी ह्याकाङ्क्षेति, शाब्दी शब्दप्रयोज्या, तथाच अन्वयबोधमात्रे आकाङ्क्षाजनकपदार्थः पदार्थोपस्थितिर्वा कारणं,

पातात्, तथाचावश्यक्लृप्तैकार्थ्यपदार्थोपस्थितौ पदमन्यथासिद्धं न कारणमिति, तन्न, पदार्थानामतीतादिरूपतया अकारणत्वात्, पदार्थस्मरणस्यापि निर्व्यापारतया अकरणत्वात्, पदज्ञानस्यैव करणत्वात्, पदार्थस्मृतेर्व्यापारत्वात्, कविकाव्यादिस्थले च मानसज्ञानं हेतुरिति ॥ १५ ॥

---

पदज्ञानजन्यपदार्थोपस्थित्युत्तरान्वयबोधे पदस्मारितयोः पदार्थयोः जिज्ञासा वक्तृतात्पर्यज्ञानञ्च हेतुः, पदज्ञानाजन्यार्थोपस्थित्युत्तरान्वयबोधे पदार्थयोर्जिज्ञासारूपा आकाङ्क्षा हेतुर्न वक्तृतात्पर्यज्ञानमपीति पर्यवसितम्। भट्टमतानुसारी गुरुणोक्तदोषं निरसितुमाह अत एवेति कविकाव्यस्थले व्यभिचारेण पदस्य हेतुत्वासम्भवादेवेत्यर्थः, पदानामवच्छेदकत्वमिति पदानां कारणत्वमित्यर्थः। पदस्य कारणत्वे युक्तिमाह पदजन्योपस्थितिं विनेति, श्वेतोऽश्वो धावतीतियुक्तेः लिङ्गजत्वाभ्युपगमात् न तत्रानुपपत्तिः। पदस्य कारणत्वे प्राचां संवादमाह, तदुक्तमिति, प्राथम्यादिति प्रथमोपस्थितत्वात् इत्यर्थः, ननु प्रथमोपस्थितत्वमात्रं यदि कारणतासाधकं तदा प्रथमोपस्थितमन्यदुदासीनमपि कारणं स्यादित्यत आह अभिधावत्वादिति इत्यस्य विवरणं पदार्थोपस्थापकत्वात् पदार्थोपस्थापकत्वेन पदस्य अवश्यक्लृप्तनियतपूर्ववर्त्तिताकत्वादित्यर्थः, तात्पर्यवर्णमपि पदस्यावश्यकत्वमाह, तात्पर्योपगमादपीति तात्पर्यवत्त्वस्य शाब्दधीहेतुत्वोपगमादपीत्यर्थः, सा शक्तिः शाब्दबोधोपयिकी शक्तिः शाब्दबोधकारणत्वमिति यावत्, पदानामेवेत्येवकारेण पदार्थस्य शाब्दबोधकारणत्वव्यवच्छेदः। गुरुमते दूषणान्तरमाह, पदानामित्यत्रेति गुरुमतमित्यङ्गीकृत्यादिः, प्रक्षेपेणापीति अविभिन्नक्रमे आम्नानामपि प्रक्षेपेण इति योजना, आम्नावच्छेदकत्वापातादिति आम्नस्य कारणत्वापातादित्यर्थः, प्राथम्यादितः यदि पदानाम् अन्वयबोधे करणत्वं तदा आम्नानामेव तथात्वात् तेषाम् अन्वयबोधकरणत्वं स्यादिति यावत्। आम्नस्य पदोच्चारयितृत्वेन पदादपि प्राथम्यम्, आप्तोक्तपदज्ञानस्य पदार्थोपस्थापकतया अभिधावत्वम्, आप्तवक्तृतात्पर्यज्ञानस्य हेतुतया तात्पर्यघटकतयापि आम्नस्यावश्यकत्वम्। तथाच यथा आम्नानां पदोच्चारणमात्रे हेतुत्वं नान्वयबोधे तथा पदानां पदार्थोपस्थितिमात्रे हेतुत्वं नान्वयबोधे आकाङ्क्षादिविशिष्टपदार्था एव अन्वयबोधका-इति भावः। ननु पदार्थानामिव ज्ञानस्यापि कारणत्वमित्याशङ्क्याह यथार्थेति, यथार्थ-

ननु शब्दोऽतिरिच्यतां प्रमाणं, स एव बाधकोऽस्तु तथाहि "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥" इति गीतां पठन्ति। प्रकृतेर्बुद्धितत्त्वस्य गुणैः सत्त्वादिभिः क्रियमाणानि कर्माणि मोहादहं कर्त्तेति चेतनो मन्यते, तेनाभिमानिकं कर्त्तृत्वं न पारमार्थिकं, न च सर्वज्ञस्याभिमानः, विशेषदर्शनात्, कर्त्तेति तृन्निति न षष्ठी इत्यत्राह,—

न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता।
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥१६॥

अयं हि सर्वकर्त्तृत्वाभावावेदकः शब्दः अनाप्तोक्तश्चेन्न प्रमाणं,

---

श्लोकार्थेति तथाच पदार्थोपस्थित्यर्थमेव पदस्यापेक्षणीयत्वेन पदार्थोपस्थितिरेव हेतुः अन्यत् अन्यथासिद्धमिति भावः। भट्टमतं दूषयति तन्नेति, मानसज्ञानमिति अलौकिकमानसप्रत्यक्षमित्यर्थः, तथाच कविकाव्यानुरोधेन श्लोकतज्ज्ञानस्य प्रत्यक्षत्वेनैवोपपत्तौ तत्र वैजात्यान्तरकल्पने मानाभावः शाब्दयामीत्यनुभवसिद्धज्ञानं प्रति पदज्ञानस्य कारणता अन्वय-व्यतिरेकसिद्धेति भावः ॥ १५ ॥

नास्तिकः प्रत्यवतिष्ठते नन्वित्यादिना, मोहादिति बुद्धितत्त्वेन सह आत्मनोभेदाग्रहादित्यर्थः, आभिमानिकं कर्त्तृत्वमिति भेदाग्रहनिमित्तकं कर्त्तृत्वमित्यर्थः, चेतनस्येति शेषः। न पारमार्थिकमिति तथाच चेतनस्यात्मनो निर्विकारतया कृतिरूपपरिणामासम्भवात् पारमार्थिककर्त्तृत्वस्यासम्भव इति भावः। ननु जगत्कर्त्तृत्वेन ईश्वरस्यासिद्धावपि सर्वज्ञत्वेन ईश्वरसिद्धिरप्रत्यूहैवेत्यत आह न च सर्वज्ञस्येति, सर्वज्ञस्य अभिमानाभावे हेतुमाह विशेषदर्शनादिति बुद्धि-चेतनयोर्भेदग्रहादित्यर्थः, तथाच सर्वज्ञत्वेन जगत्कर्त्तृत्वेन च नेश्वरसिद्धिरिति भावः। ननु कर्त्तेति कृद्योगे कर्माणि इत्यत्र कथं न कर्मणि षष्ठी इत्यत आह न षष्ठीति, तथाच अकादिकृद्योगे षष्ठीविधानात् तृन्प्रत्ययस्य तादित्वान्न षष्ठीति भावः। अनाप्तोक्तिरित्यस्य विशेष्यं पूरयति अयं हीति, शब्द इति प्रकृतेः क्रियमाणानीत्यादिगीतात्मकः शब्द इत्यर्थः, नूनं नादृष्टे इत्यादि अदृष्टे वाक्यार्थे यस्य यथार्थज्ञानविरहवति क्वचित् कुत्रचित् पुंसि न आप्तता वाक्यप्रामाण्यप्रयोजकयथार्थ

आप्तोक्तत्वे चैतदर्थगोचरज्ञानवतो नित्यसर्वविषयकज्ञानवत्त्वम् इन्द्रि-याद्यभावात्, आगमस्य च नित्यत्वं दूषितमेव प्रागिति वेदकारो-नित्यः सर्वज्ञः सिद्ध्यति ॥ १६ ॥

नन्वसत्त्वबोधकागमानां का गतिस्तत्राह,—

न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात् ।
निरञ्जनावबोधार्थं न च सन्नपि तत्परः ॥ १७ ॥

असावागमो नासत्त्वमात्रपर एव, सत्त्वस्यापि बहुशः "मत्तः सर्वं प्रवर्त्तते" इत्यादिभिः प्रतिपादनात् द्वयोश्च न मुख्यार्थत्वं विरोधात्, विनिगमकचिन्तायां विशेषगुणशून्यात्मस्वरूपस्य ध्येयत्वतात्पर्य-

---

वाक्यार्थज्ञानवत्त्वरूपाप्तता, मूले अदृष्टद्रष्टावित्यस्य तद्वाक्यवक्तुरित्यादिः, अदृष्टदर्शी अदृष्टस्य अतीन्द्रियस्य तादृशवाक्यार्थस्य द्रष्टा ज्ञाने ऽस्यां ज्ञातायामिति शेषः, सर्वज्ञः तद्वाक्यवक्ता सर्वज्ञः, तथाच तस्यैवेश्वरत्वं न तादृशवाक्यस्य बाधकत्वम् इति भावः। इममेवार्थमाह टीकायाम् एतदर्थेत्यादिना। ननु तावतापि कथं नित्यसर्वविषयकज्ञानवत्त्वसिद्धिः इत्यत आह इन्द्रियाद्यभावादिति तथाच इन्द्रियादिजन्यं ज्ञानम् इन्द्रियसन्निकर्षादिनियन्त्रित-विषयकम् अशरीरस्य इन्द्रियाद्यभावात् तज्ज्ञानं सुतरां नित्यं विनियमकाभावात् सर्व-विषयकञ्चेति नित्यसर्वज्ञत्वेनेश्वरसिद्धिरिति भावः। ननु तद्वाक्यस्य नित्यत्वेन कथं तदनु-मया ईश्वरसिद्धिरित्यत आह मूले न च नित्यागम इति, उक्तनीत्या वाक्यं नित्यागमः नित्यवेदैकदेशः अतः अयं प्रमाणम् इति न चेत्यर्थः, अत्र हेतुं पूरयति आगमस्य चेत्यादि, प्रागिति द्वितीयस्तबक इत्यर्थः ॥ १६ ॥

असत्त्वबोधकागमानामिति अकर्तृत्वबोधकागमानामित्यर्थः। मूले न चासाविति असौ आगमः क्वचित् असत्त्वमात्रपरे अकर्तृत्वमात्रपर इति यावत्, न एकान्तः न नियतः न तात्पर्यविषय इति यावत्, कर्त्रादित्यस्य विवरणं टीकायाम् असत्त्वमात्रपर एवेति। मूले सत्त्वस्यापीति कर्तृत्वस्यापि प्रवेदनात् प्रतिपादनादित्यर्थः। ननु तर्हि तादृशा-गमस्य किं तात्पर्यमित्यत आह, मूले निरञ्जनेत्यादि, सन्नपि आपाततः असत्त्वबोधकत्वेन प्रतीयमानः सन् विद्यमानोऽपि क्वचिदागमः निरञ्जनावबोधार्थः आत्मनो यन्निरञ्जनत्वं

कत्वं बाधकश्रुतीनां, साधकश्रुतीनाञ्च कार्य्य-कारणभावादितर्क-मूलकानुमानसाचिव्येन मुख्यार्थकत्वात् ॥ १७ ॥

ननु यद्यसौ सर्वज्ञः स्यात् अनुपदिश्यापि प्रवर्त्तयेदित्युपदेशा-नुपपत्तिरेवास्तु ईश्वरे बाधिका, न ह्ययमनुपदिश्य स्वयं प्रवर्त्तयितुं न जानाति सर्वज्ञत्वानुपपत्तेः, अर्थापत्तिश्च मानान्तरं तत्राह,—

हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा।
तदभावात् प्रवृत्तिर्न कर्मवादेऽप्ययं विधिः ॥ १८ ॥

प्रमाणेऽसति न प्रमा प्रमाणरूपहेत्वभावे फलाभावात् प्रमा-विरहात्, प्रमाविरहे च न प्रवृत्तिः कारणाभावात्, प्रमाकारण-

---

विशेषगुणशून्यत्वं तदर्थ्यमित्येवम्परः, न च तत्परः न त्वकर्त्तृत्वपर इत्यर्थः। तथाच निरञ्जनं ब्रह्मेति श्रुतिः मोक्षादिरूपेष्टसाधननिरञ्जनत्वप्रकारकध्यानविषयब्रह्मपरा न त्वकर्त्तृत्वेन ब्रह्मपरेति भावः। ननु साधकश्रुतीनामेव गौणार्थत्वं बाधकश्रुतीनां मुख्यार्थत्वम् इत्यपि किं न रोचयेः इत्यत आह टीकायां साधकश्रुतीनामित्यादि, तथाच तर्कसहकृतत्वेन साधकश्रुतीनामेव बलवत्त्वमिति भावः ॥ १७ ॥

अनुपपत्तिं बाधकत्वेन प्रमाणयति, यद्यसौ सर्वज्ञः स्यादिति, अनुपदिश्यापि वेदमन्तरापि, प्रवर्त्तयेदिति यागादावित्यादिः, तथाच उपदेशं विना यस्य ज्ञानं प्रवर्त्तकं भवेत् तस्यापि सर्वज्ञ इत्यत्र मतान्तर्गतत्वेन वेदादिरूपोपदेशकर्त्तुरीश्वरस्य तज्ज्ञानाभावात् न सर्वज्ञत्वसम्भव इति भावः। इतीति सर्वज्ञस्य उपदेशं विनापि प्रवर्त्तकत्वसम्भवादित्यर्थः, उपदेशानुपपत्तिरेव उपदेशकर्त्तृत्वाभावप्रसङ्ग एवेत्यर्थः, ईश्वरे बाधिकेति ईश्वरे सर्वज्ञत्वा-भावसाधिकेत्यर्थः, ईश्वरस्य असार्वज्ञ्यं विना उपदेशकर्त्तृत्वं न निर्वहति इत्यनुपपत्तिरेव ईश्वरस्य सर्वज्ञत्वाभावसाधिकेति फलितार्थः, तथाच वेदस्यासर्वज्ञप्रणीतत्वे अप्रामाण्या-पत्त्या नित्यनिर्दोषत्वयैव वेदस्य प्रामाण्यमनन्यगत्याङ्गीकार्य्यमिति न वेदकर्त्तृत्वेश्वरसिद्धि-रिति भावः। उपदेशमात्रं शङ्कां निराकरोति न ह्ययमिति, न जानातीति इति वक्तुं न शक्यत इति शेषः। सर्वज्ञत्वानुपपत्तेरिति, तथाच उपदेशं विनापि पुरुषः यज्ञ्ज्ञात्वा कथञ्चित् कार्य्ये परं प्रवर्त्तयितुं शक्नोति तज्ज्ञानं यदीश्वरस्य न वर्त्तेत तदा

ज्योतिष्टोमेनेत्यादिविधिरेव इति नोपदेशव्यर्थता, अन्यथा कर्म्मवादेऽप्ययं विधिः अदृष्टादेव प्रवृत्तेरुपपत्तेः वेदस्यानर्थक्यापत्तिः।
न वार्थापत्तिर्मानान्तरम् ॥ १८ ॥

तदेवाह,—

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाप्यसौ समः ॥१९॥

---

कथमीश्वरः सर्वज्ञ इति भावः। नन्वनुपपत्तेः कथं साधकत्वमित्यत आह अर्थापत्तिश्च मानान्तरमिति तथाच अनुपपत्तिज्ञानस्यार्थापत्तिरूपमानत्वादिति भावः। मूले प्रमाण-इति प्रमाणे प्रवृत्तिकारणेष्टसाधनत्वादिप्रमाकरणे शब्दे असति अविद्यमाने न प्रमा नेष्टसाधनत्वादिप्रमा, अतीन्द्रिययागादेः प्रमाणान्तरानुपस्थितेरिति भावः। अत एवानुमाऽप्यभाव इति कारणाभावस्य कार्य्याभावनियामकत्वादिति भावः। टीकायां न प्रवृत्तिरिति न यागादौ प्रवृत्तिरित्यर्थः, नोपदेशव्यर्थतेति तथाच उपदेशं विना प्रवर्त्तनस्य खपुष्पादिवदलीकतया न तदज्ञाने सार्वज्ञ्यहानिरिति भावः। अन्यथेति उपदेशाभावे प्रवृत्तिसम्भव इत्यर्थः, कर्मवादेऽपि कर्मजन्यादृष्टादेव जगदुत्पद्यते न त्वीश्वरादिति कर्म-मीमांसकमतेऽपि, कारिकायाम् अयं विधिरिति इदं तुल्यमित्यर्थः, एतदेव व्याचष्टे टीकायाम् अदृष्टादेवेति, वेदस्यानर्थक्यापत्तिरिति तथाच उपदेशमन्तरेणापि यत्र अदृष्टं नास्ति तत्र प्रवृत्त्यनुत्पत्तौ सर्वत्रादृष्टमेव कारणमिति महाजनपरम्परायां वेदोपदेशस्य विफलत्वेन वेदस्यानर्थक्यप्रसङ्ग इति भावः ॥ १८ ॥

ज्योतिःशास्त्रात् देवदत्तस्य शतवर्षजीवित्वं अवगतं प्रत्यक्षेण जीवितो देवदत्तस्य गृहासत्त्वञ्चावगतं शतवर्षजीविनो देवदत्तस्य बहिःसत्त्वं विना गृहासत्त्वं नोपपद्यते इत्य-नुपपत्तिज्ञानरूपार्थापत्तिप्रमाणेन देवदत्तस्य बहिःसत्त्वज्ञानं भवति तदेव अर्थापत्तिफलम् इति केचन मीमांसका मन्यन्ते तन्मतं दूषयन्ति, न वेत्यादि, अत्र अर्थापत्तिशब्दवाच्य-ज्ञानम् अनुमितिभिन्नं न वेति प्रमितौ विप्रतिपत्तिः, प्रमाणे च व्यतिरेकव्याप्तिविषय-कानुमितिभिन्नप्रमितिकरणं न वेति विप्रतिपत्तिः, व्यतिरेकव्याप्तिविशिष्टवैशिष्ट्यावगाहि-बुद्धेः व्याप्तिज्ञानानुव्यवसायस्य च वारणाय व्यतिरेकव्याप्तिविषयकेति अनुमितिविशे-

जीवी देवदत्तो गेहे नास्तीति ज्ञानानन्तरं बहिरस्तीति धीरुदाहरणं, तत्रानियम्यस्याव्याप्यस्य नायुक्तिर्नानुपपत्तिः, अनियन्ता अव्यापकोनोपपादकः, व्यापकव्यतिरेकेण व्याप्यस्यैव व्यतिरेकात्,.. तादृशानुपपत्तिज्ञाने व्यतिरेकव्याप्तिधीरेव। यदपि क्वचिदस्ति गेहे नास्तीतिज्ञानानन्तरं विरोधज्ञानेऽविरोधाय गेहान्यविषयता क्वचिदस्तीत्यस्य त्वर्थापत्तिरिति, तदपि न, न हि वास्तवोमानयो-

---

पयम्। न वा अर्थापत्तिर्मानान्तरमिति अर्थापत्तिः अर्थापत्तिशब्दवाच्यं ज्ञानं तत्र अस्मन्मते व्यतिरेकव्याप्तिज्ञानजन्यानुमितिरेव, मीमांसकमते चातिरिक्ता, न मानान्तरं नानुमितिभिन्नमित्यर्थः, अतो न सिद्धासिद्धिभ्यां व्याघातः। अत्र अनुमितिसामग्रीजन्यत्वे सति जन्यत्वं हेतुरिति हृदयम्।

उपपाद्यस्य उपपादकाभावव्यापकीभूताभावप्रतियोगित्वम् अनुपपत्तिः तच्च व्यतिरेकव्याप्तिरूपं, तथाहि देवदत्तो बहिरस्ति गृहावस्थित्वाभाववत्त्वे सति जीवित्वात् यन्नैवम् तन्नैवम् यथा मृतोऽगृहस्थितो वा इति व्यतिरेक्यनुमानेनैव अर्थापत्तिफलसिद्धिसम्भवात् अर्थापत्तेः नानुमितिभिन्नप्रमितिकरणत्वं इत्यभिप्रेत्य दूषयति, मूले अनियम्यस्येत्यादि। उदाहरणमिति गृहावस्थित्वाभावविशिष्टजीवित्वं देवदत्तस्य बहिरस्तित्वं विना अनुपपन्नमित्यनुपपत्तिग्रहात् बहिरस्तित्वधीरर्थापत्तिप्रसिद्धस्थलमित्यर्थः, तत्र अनुपपत्तिज्ञाने, विषयत्वं सप्तम्यर्थः, अव्याप्यस्य उपपादकाव्याप्यस्य नानुपपत्तिः न उपपादकाभावप्रयुक्ताभावप्रतियोगित्वं, अव्यापकः उपपाद्याव्यापकः, नोपपादकः न उपपाद्याभावप्रयोजकाभावप्रतियोगी,. अत्र हेतुमाह व्यापकव्यतिरेकेणेति तृतीयार्थः प्रयुक्तत्वं, तच्च व्याप्यव्यतिरेकान्वयि, प्रयुक्तत्वं व्यापकत्वं तथाच उपपादकव्यापकीभूताभावप्रतियोगित्वम् उपपाद्यस्येति पर्यवसितं तदेव च व्यतिरेकव्याप्यत्वरूपम्, अतः व्यतिरेकव्याप्तिज्ञानात्मकम् अनुपपत्तिज्ञानम् अनुमानविधयैव प्रमाणं न तस्य मानान्तरत्वेन प्रमाणत्वम् इति भावः। एवञ्च अथार्थज्ञानाभावस्य सार्वज्ञरूपतया सार्वज्ञव्यापकीभूताभावप्रतियोगित्वरूपव्याप्त्यात्मकानुपपत्तिमवेदोपदेशकत्वस्य ईश्वररूपपक्षे ज्ञानस्य सार्वज्ञाभावानुमापकतया मीमांसकमते पक्षाप्रसिद्धा तदनुमानं न सम्भवति पक्षाप्रसिद्धा अनुमानासम्भवस्य ज्ञानमानमनाश्रयमित्यनेन प्रागेवोक्तत्वमिति हृदयम्। यत्र प्रमाणयोर्विरोधः तत्रार्थापत्तिर-

विरोधः, तथा सत्येकं मानं भज्येत, विरोधज्ञानस्य तु विषयभेद-व्यवस्थापकत्वमनुमानविधयैव, तथाहि विरोधोभिन्नविषयकः एक-विषयतायां विरुद्धत्वे सति प्रमाणसिद्धत्वादिति, अन्यथा धूमोऽप्यनुप-पद्यमानो वह्निं गमयेदित्यर्थापत्तिरिति प्रसिद्धमनुमानं न स्यात्, अर्वाग्भागावच्छेदेन वह्न्यनुपलब्धः धूमस्य वह्निसाधनमिति विरोधे-ऽपरभागावच्छेदेन वह्निव्यवस्थापनमप्यर्थापत्तेरेव स्यात्, अनुमाना-

---

विरोधोपपादिका विरोधाविरोधयोर्व्याप्य-व्यापकभावविरहात् अनुमानं न सम्भवतीति अर्थापत्तेः प्रमाणान्तरत्वम् इति केषाञ्चित् मतमुत्थाप्य दूषयति यदपीति, ज्ञानानन्तरमिति देवदत्तः क्वचिदस्ति गेहे नास्ति इति ज्ञानद्वयोरनन्तरमित्यर्थः, विरोधज्ञान इति सतीति शेषः, विरोधज्ञानञ्च क्वचिदस्तीतिज्ञानम् एकधर्मावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन सविषय-गेहास्तित्वविरोधिगेहास्तित्वाभावविषयकज्ञानवदिति ज्ञानं, तदेव अर्थापत्तिरूपं प्रमाणं, तत्र क्वचिदस्तीतिज्ञानस्य गेहातिरिक्तास्तित्वविषयकत्वकल्पनया अविरोधोपपादकं भवति, अविरोधाय अविरुद्धविषयकत्वाय, गेहान्यविषयतेत्यादि, क्वचिदस्तीत्यस्य क्वचिदस्तीति ज्ञानस्य, गेहान्यविषयता गेहातिरिक्तास्तित्वविषयकत्वम्, अर्थापत्तिः अर्थापत्तिप्रयोज्येत्यर्थः । मतं दूषयति तदपीति, न हीत्यादि मानयोः क्वचिदस्ति-गेहेनास्तीतिज्ञानयोः न वास्तवो-विरोधः न वस्तुगत्या विरुद्धविषयकत्वं, तथा सतीति वास्तवविरोधे सतीत्यर्थः, भज्येत बाध्येत, तथाच समानप्रकारकविरोधिज्ञानस्य प्रतिबन्धकतया एकधर्मिणि गेहास्तित्व-ज्ञान-गेहास्तित्वाभावज्ञानयोः मिथोविरोधेनासम्भव इति भावः । ननु विरोधज्ञानस्य विषयभेदव्यवस्थापकत्वप्रवादः कथं सङ्गच्छते इत्यत आह विरोधज्ञानस्येति, एकधर्मा-वच्छिन्नैकात्मवृत्तित्वसम्बन्धेन विरोधिज्ञानस्य तदुपपादकापत्तिविशेष्यकस्येत्यर्थः, विषयभेदव्यव-स्थापकत्वं विरोधिज्ञानप्रतिबध्यज्ञानाविषयविषयकत्वप्रतिपादकत्वं, विरोध इति देवदत्तो गेहे नास्तीति प्रमाकालीनं देवदत्तः क्वचिदस्तीति यथार्थज्ञानमित्यर्थः, भिन्नविषयक इति देवदत्तधर्मिक-गेहान्यवृत्तित्वप्रकारक इत्यर्थः, एकविषयतायामिति एकधर्मावच्छिन्नैकात्म-वृत्तित्वसम्बन्धेन देवदत्तो गेहे नास्तीतिप्रमाविशिष्ट-देवदत्तधर्मिकगेहवृत्तित्वप्रकारकप्रमात्वे इत्यर्थः, इदंधर्मविशिष्टप्रमात्वम् बाधार्थज्ञाने प्रसिद्धम् । विरुद्धत्वे सतीति एकधर्मा-वच्छिन्नैकात्मवृत्तित्वसम्बन्धेन देवदत्तो गेहे नास्तीतिविरोधिप्रमाकतदुपपादकापत्ति-

भावेऽपि च व्याप्तिग्राहकमानस्य वह्निसाधकत्वमर्थापत्तेरित्यनुमानविलोपः स्यादिति ॥ १८ ॥

अनुपलब्धिश्च नेश्वरे बाधिकेति योग्यादृष्टिरित्यादिनोक्तम्, वस्तुतोऽनुपलब्धिर्मानान्तरमेव नेत्याह,—

---

विशेष्यत्वे सतीत्यर्थः, एकविषयतायामित्यत्र सप्तम्यर्थः प्रयोज्यत्वं, तस्य च विरुद्धत्वपदार्थघटकापत्तावन्वयः, तथाच निरुक्तैकविषयत्वरूपापादकाधीन-निरुक्तविरुद्धत्वरूपापाद्यकापत्तिविशेष्यत्वे सतीति समुदितार्थः। आपत्तिश्च देवदत्तो गृहे नास्तीतिप्रमासमानकालीनं देवदत्तः क्वचिदस्तीति यथार्थज्ञानं यदि देवदत्तो गृहे नास्तीतिप्रमासमानकालीनदेवदत्तधर्मिकगृहवृत्तित्वप्रकारकप्रमा स्यात् तदा एकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन देवदत्तो गृहे नास्तीतिविरोधिप्रमावत् स्यादित्येवंरूपा। आपत्तौ बाधस्यानुगुणत्वात् तादृशविरोधाभावे तात्पर्यमिति भावः। सिद्धत्वादिति क्वचिद्गृहवृत्तित्वप्रकारक-देवदत्तविशेष्यकप्रमात्वादित्यर्थः। प्रसिद्धे वाप्यसौ समः इत्यत्र वाशब्दस्य अव्ययानामनेकार्थत्वात् अर्थश्चात्र अन्यथेति विरोधज्ञानस्य अर्थापत्तिविधया विषयभेदव्यवस्थापकत्व इत्यर्थः, मूले प्रसिद्धे इति सर्वानुभवसिद्धेऽप्यनुमाने इत्यर्थः, असौ अर्थापत्तिप्रमाणभेदः, समः तुल्ययुक्त्या प्रसक्त इत्यर्थः, तथाच अनुमानजन्यफलस्य अर्थापत्तिप्रमाणेन सिद्धिसम्भवे अनुमानस्य प्रमाणान्तरत्वं भज्येत इति भावः। इदमेवार्थं विवृणोति टीकायां धूमोऽस्तीति। विरोधवशस्यार्थापत्तित्वे प्रतिबन्दिमाह अर्वाग्भागावच्छेदेनेति, तथाच अर्वाग्भागावच्छेदेन वह्नेरनुपलब्धिः वह्न्यभावग्राहकमानं, धूमश्च व्याप्तिविशिष्टपक्षधर्मत्वेन ज्ञायमानः वह्निग्राहकमानम् इति प्रमाणयोर्विरोधवशे तत एवापरभागावच्छेदेन वह्निज्ञापनं स्यात् इत्यर्थापत्तिरनुमानविलोपिका स्यादिति भावः। एवञ्च सर्वजनसिद्धानुमानेनैवोपपत्तौ नार्थापत्तिः प्रमाणान्तरमिति फलितार्थः। यदि सामान्यसामग्री एकविशेषबाधवशे तत्सामर्थ्यभिन्नं वा अपरविशेषविषयकमेकज्ञानं जनयति न तु सामग्रीविरोध इति नानुमानवैयर्थ्यं, तदा क्वचिदस्ति गृहे नास्तीत्यत्रापि सामान्यसामग्र्या गृहान्यवृत्तित्वविषयकमेकमेव ज्ञानं जनयितव्यमिति भावः ॥ १८ ॥

मूले प्रतिपत्तेरिति योग्यानुपलब्धिरूपप्रमाणजन्याभावप्रतीतिरित्यर्थः, इन्द्रियकरणकत्वस्य साध्यत्वं प्रकरणलभ्यम्, अत्र हेतुः अपरोक्षत्वं, प्रयोगस्तु योग्यानुपलब्धिजन्याभावप्रतीतिः इन्द्रियकरणजन्या अपरोक्षत्वात् घटप्रत्यक्षवत् इति, तथाच तादृशप्रतिपत्तेः

प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात्।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः॥ २०॥

यत्राज्ञातानुपलब्धिः कारणं तत् प्रत्यक्षं, ज्ञातानुपलब्धिजन्याभावज्ञानस्यानुमानत्वात्, जन्यापरोक्षज्ञानस्य इन्द्रियजन्यत्वात्, अपरोक्षत्वञ्च ज्ञानकरणकान्यत्वं, घटादिप्रत्यक्षं इव घटाभावाध्यक्षेऽपीन्द्रियस्यान्यानुपक्षीणत्वात् करणत्वं अधिकरणप्रत्यक्षाभावेऽपि

---

प्रत्यक्षरूपत्वं न तु प्रत्यक्षभिन्नविजातीयप्रमितिरूपत्वम्। न च स्वमते योग्यानुपलब्धिजन्याभावप्रतिपत्त्यप्रसिद्ध्या पक्षासिद्धिरिति वाच्यम्। योग्यानुपलब्धेरकरणत्वेऽपि सहकारिकारणत्वस्य स्वमतेऽपि स्वीकारात् करणत्व एव विवादात्। ननु तादृशप्रतिपत्तेः कथं नानुमितित्वम् इत्यत आह टीकायां यत्रेत्यादि, तथाच अनुपलब्धेर्लिङ्गविधया करणत्वे ज्ञातत्वस्यापेक्षणीयतया अज्ञातानुपलब्धिजन्याभावप्रतीतेरनुमितित्वासम्भवादिति भावः। न च अभावप्रतीतौ अनुपलब्धिः ज्ञातैवोपयोगिनी इति तज्जन्यप्रतीतेरनुमितित्वं सम्भवतीति वाच्यम्। तथा सति अनुपलब्धेः 'उपलम्भाभावरूपतया' तज्ज्ञानेऽपि ज्ञातानुपलब्धेरपेक्षणीयत्वे अनवस्थाप्रसङ्गात्। नन्वपरोक्षत्वं प्रत्यक्षत्वमेव तत्कथम् इन्द्रियजन्यत्वसाधकम् इन्द्रियजन्यत्वस्यैव प्रत्यक्षत्वसाधकत्वात् अतः अपरोक्षपदार्थमाह अपरोक्षत्वञ्चेति ज्ञानकरणकान्यत्वमिति जन्यत्वे सति ज्ञानकरणकान्यत्वमित्यर्थः, जन्यत्वविशेषणात् ईश्वरप्रत्यक्षे न व्यभिचारः। ननु व्यापारेण अन्यथासिद्धत्वात् तादृशप्रतिपत्तौ इन्द्रियस्य कथं करणत्वमित्यत आह मूले इन्द्रियस्यानुपक्षयादिति, टीकायाम् अन्यानुपक्षीणत्वादिति व्यापारेण व्यापारिणो नान्यथासिद्धिरिति नियमात् व्यापारेण इन्द्रियस्य अनन्यथासिद्धत्वादिति पर्यवसितार्थः, अन्यथा घटादिप्रत्यक्षेऽपि व्यापारेण इन्द्रियस्य अन्यथासिद्धत्वप्रसङ्गात् इति। न च ज्ञानसामान्ये मनसो हेतुत्वात् मनोजन्यत्वमादाय सिद्धसाधनमिति वाच्यम्। इन्द्रियजन्यत्वपदेन इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यत्वस्य ज्ञानत्वानवच्छिन्नेन्द्रियजन्यत्वस्य वा विवक्षितत्वात्। करणत्वम् इन्द्रियनिष्ठकरणतानिरूपकत्वम् इन्द्रियजन्यत्वमिति वाच्यम्, अतः प्रतिपत्तिरूपपक्षे बाधस्य वृत्तिः, एवम् इन्द्रियस्यानुपक्षयादित्यस्य अनन्यथासिद्धेन्द्रियव्यापारजन्यता

शब्दादिध्वंसस्य वायौ रूपाभावस्य च ग्रहात् अधिकरणग्रहेऽप्यनुपचयात्, अज्ञातकरणजन्यज्ञानत्वेन इन्द्रियजन्यत्वानुमानाच्च। भावावेशाच्च चेतसः मनसः, अस्मदादिवाह्यानुभवस्य भावभूतकरणसचिवमनोजन्यत्वनियमात् नानुपलब्धिः करणं किन्त्विन्द्रियमेवेति ॥ २० ॥

---

दित्यर्थकत्वात् तादृशपक्षे हेतोः सत्त्वमिति ध्येयम्। ननु अभावप्रत्यक्षमवश्यं किञ्चिद्धर्मिविशेष्यकत्वेन धर्मिप्रत्यक्षात्मकमपि धर्मिप्रत्यक्षञ्च अवश्यमिन्द्रियसन्निकर्षजन्यं त्वयापि वाच्यं तथाच व्यापारैव इन्द्रियस्य अनन्यथासिद्धत्वेऽपि अधिकरणप्रत्यक्षार्थमिन्द्रियस्यापेक्षणीयत्वेन अधिकरणग्रहेण अन्यथासिद्धत्वं स्यादित्याशङ्कां निराकरोति अधिकरणप्रत्यक्षाभावेऽपीति अधिकरणलौकिकप्रत्यक्षाभावेऽपीत्यर्थः, शब्दध्वंसस्येति आकाशे इत्यादिः, तथाच आकाशं शब्दध्वंसवदित्यतीन्द्रियविशेष्यकप्रत्यक्षे अधिकरणभानम् उपनीतभानात्मकमवश्यमङ्गीकार्यम् इति तत्र अधिकरणप्रत्यक्षार्थम् इन्द्रियस्यानपेक्षणीयतया अधिकरणप्रत्यक्षेण इन्द्रियस्यानन्यथासिद्धत्वमिति भावः। ननु भूतलं घटाभाववदिति प्रत्यक्षस्य भूतलांशेऽपि लौकिकतया तत्र तत्प्रत्यक्षार्थम् इन्द्रियस्यापेक्षणीयत्वेन इन्द्रियमन्यथासिद्धमिति तत्रानुपलब्धिकरणताया आवश्यकत्वे सर्वत्रैवानुपलब्धिकरणकत्वमभावप्रत्यक्षस्येतीन्द्रियमन्यथासिद्धमित्यत आह अधिकरणग्रहेऽपीति क्वचिदभावप्रत्यक्षस्य अधिकरणलौकिकप्रत्यक्षरूपत्वेऽपि, अनुपचयादिति तथाच अधिकरणग्रहस्य व्यापारतया तेनान्यथासिद्ध्यभावादन्यथा घटादिप्रत्यक्षेऽपि निर्विकल्पकादिनेन्द्रियस्यान्यथासिद्धिप्रसङ्गादिति भावः। ज्ञायमानलिङ्गस्य अनुमितिकरणतावादिन आचार्यस्य मते अनुमितेः ज्ञानकरणकान्यत्वेन ज्ञानकरणकान्यत्वाभावापरोक्षत्वरूपहेतोः अनुमितौ इन्द्रियजत्वव्यभिचारित्वम् अतः उभयमते इन्द्रियजन्यत्वसाधकं हेतुमाह मूले अज्ञातकरणत्वादिति, एतदेव विवृणोति टीकायाम् अज्ञातकरणजन्यज्ञानत्वेनेति अज्ञातकरणजन्यज्ञानत्वं ज्ञानत्वावच्छिन्नकरणतानिरूपितकार्यतानवच्छिन्नत्वे सति ज्ञानत्वावच्छिन्नकरणतानिरूपितकार्यतावच्छिन्नत्वे सति च जन्यत्वं, तथाच ज्ञायमानलिङ्गस्यानुमितिकरणत्वे लिङ्गज्ञानस्य अनुमितिकरणत्वे वा अनुमितौ तादृशहेतोरसत्त्वान्न व्यभिचार इति भावः। इन्द्रियजन्यत्वसाधने हेत्वन्तरमाह, भावावेशाच्च चेतस इति, अस्मदादिवाह्यानुभवस्येति ईश्वर

साधकान्तरमाह,—

प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः।
अत्वाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥२१॥

इन्द्रियाणि करणमिति साध्यं, प्रतियोगिग्राहकत्वात्, यथानुमानं घटस्येव तदभावस्यापि ग्राहकं तद्दिन्द्रियमपि। ननु प्रतियोगिग्राहकत्वमतन्त्रं, अनन्यथासिद्धत्वस्योपाधित्वात्, आश्रयग्रहेण इन्द्रियस्यान्यथासिद्धेरित्यत आह व्यापाराव्यवधानत इति व्यापारेणाधिकरणप्रत्यक्षेण इन्द्रियस्यान्यथासिद्ध्यभावात्, अन्यथा संयोगेन चक्षुरादिकमन्यथासिद्धं भावग्रहेऽपि स्यात्। किञ्चाभावभ्रमस्य

---

प्रत्यक्षवारणाय चक्षुरादीति जन्येति तदर्थः, सुखाद्यनुभवे व्यभिचारवारणाय बाह्येति। बाह्यपदस्य सहकारितापरत्वमभिप्रेत्य समुदितार्थमाह भावभूतेति अत्र भूतपदं स्वरूपार्थकं, भावस्वरूपकरणसहकृतमनोजन्यत्वादिति समुदितार्थः। शरीरादेः असाधारणकारणत्वरूपकरणत्वाभावात् न शरीरादिकमादाय विरुद्धार्थनम्। तथाचायं प्रयोगः जन्या बाह्यविषयकाभावप्रतिपत्तिः भावस्वरूपकरणसहकृतमनोजन्या जन्यत्वे सति बाह्यानुभवत्वात् घटादिप्रत्यक्षवदिति। पक्षतावच्छेदावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् अनुपलब्धिजन्यत्वेनाभिमतायामपि अभावप्रतिपत्तौ इन्द्रियजन्यत्वसिद्धेः अनुपलब्धिर्नाभावग्राहिकेति ध्येयम् ॥ २० ॥

इन्द्रियाणीति पक्षनिर्देशः, साध्यमिति प्रकरणादिति शेषः। प्रतियोगिनि सामर्थ्यात् इति सूत्रं विवृणोति प्रतियोगिग्राहकत्वादिति, तथाच यत् यत्प्रतियोगिग्राहकं तत् तदभावग्राहकम् इति सामान्यव्याप्त्या बहिरिन्द्रियाणामभावग्राहकत्वं साधनीयम्, अत्र दृष्टान्तमाह यथानुमानमित्यादि, न च यत्रानुमाने प्रतियोगिग्राहकत्वं तत्राभावग्राहकत्वाभावाद् उक्तानुमानस्य व्यभिचार इति वाच्यम्। अनुमानादिकम् अभावग्राहकव्यक्ति भावग्राहकवृत्तिजातित्वात् शब्दत्ववत् इत्यनुमाने तात्पर्यात्। न चेदमप्रयोजकं, यदीदृशनियमो न स्यात् तदा भावग्राहकशब्दजातीयं प्रमाणमपि नाभावमावेदयेत् इति तर्कस्य प्रयोजकत्वात्। व्यापाराव्यवधानत इत्यस्य व्यापारेणान्यथासिद्ध्यभावादित्यर्थे

दुष्टकरणजन्यत्वमवश्यं वाच्यं, दोषश्चेन्द्रियादिनिष्ठ एव, अनुपलब्धेर्दोषवत्त्वाभावात्, पित्तादिना इन्द्रियस्यैव दुष्टत्वात्, तदिदमुक्तम् अन्याय्यत्वाद्दोषाणामिति। अधिकरणाभावयोर्विशिष्टधीर्नेन्द्रियजा अभावधीत्वात्, नानुपलब्धिकरणजा भावधीत्वादतोविशिष्टग्राहीन्द्रियं स्वीकार्य्यं तदिदमुक्तं विकल्पनात् विशिष्टविषयकज्ञानात्॥ २१॥

नन्वनुपलब्ध्या घटाभावस्य ज्ञानं ततश्च घटाभाववद्भूतलमिति ज्ञानं, घ्राणजसौरभोपनयानन्तरं सुरभि चन्दनमिति चाक्षुषवत्

---

विशेषेण ज्ञापयितुं अवतारयितुकामाह नन्विति, अतन्त्रमिति अभावग्राहकत्वे न तन्त्रमित्यर्थः, उपाधित्वादिति अभावग्राहकत्वे तन्त्रत्वादित्यर्थः। व्यापारेणाधिकरणग्रहेण व्यापारिण इन्द्रियस्य अन्यथासिद्धत्वे प्रतिबन्दिमाह अन्यथेति। अभावभ्रमस्य दुष्टकरणजन्यत्वात् अनुपलब्धेश्च स्वरूपतो दुष्टत्वाभावात् पित्तादिना दुष्टमिन्द्रियं तत्करणमित्याह किञ्चेति, अभावभ्रमस्य मद्रादौ चैत्याभावभ्रमस्य, अवश्यं वाच्यमिति तथाच मद्र-धर्मिकचैत्याभावभ्रमः दुष्टकरणजन्यः भ्रमत्वात् इत्यनुमानेन अभावभ्रमस्य इन्द्रियजन्यत्वसिद्धौ यत् यद्भ्रमकरणं तदेव तत्प्रमाकरणं रूपप्रमाकरणचक्षुर्वदिति सामान्यव्याप्त्या अभावप्रमायामपि इन्द्रियस्य करणत्वसिद्धिः सुतरां क्वापि अभावप्रतिपत्तौ अनुपलब्धेः न करणत्वसिद्धिरिति भावः। घटाभाववद्भूतलमिति विशिष्टबुद्धिः नेन्द्रियजन्या अभावबुद्धित्वात्, नानुपलब्धिजन्या भावबुद्धित्वात्, नोभयजन्या अनुपलब्धिजन्यतावच्छेदकत्वेन सिद्धवैजात्येन सह इन्द्रियजन्यतावच्छेदकत्वेन सिद्धवैजात्यस्य सङ्करप्रसङ्गादतः अनुपलब्धेरभावबुद्धौ सामर्थ्येऽपि भावबुद्धौ सामर्थ्याभावात् इन्द्रियस्य सन्निकर्षद्वारा भावबुद्धौ अभावबुद्धौ च सामर्थ्यात् इन्द्रियमेव तादृशविशिष्टबुद्धिकरणं नानुपलब्धिः एकजातीयज्ञानस्य एकजातीयकरणजन्यत्वनियमात् इत्येवं विकल्पनादितिसूत्रतात्पर्यं वर्णयति अधिकरणाभावयोरिति। विशिष्टग्राहीन्द्रियं स्वीकार्य्यमिति, तथाचायं प्रयोगः इन्द्रियम् अभावधीविषयसम्बद्धकरणम् अभावविशिष्टज्ञानीयधर्मिविषयताप्रयोजकत्वादित्यर्थः। न चाधिकरणाभावयोर्विशिष्टधीः नेन्द्रियजा अभावधीत्वादित्यनुमानं बाधकमिति वाच्यम्। तादृशानुमानस्याप्रयोजकत्वादिति॥ २१॥

इत्यभावग्राहिकानुपलब्धिः कारणतया वाच्या, निर्विकल्पकविषयीकृत एव इन्द्रियेण सविकल्पकविषयतया गृह्यते तथा दर्शनात् अभावेनेन्द्रियप्रत्यासत्तेरभावात् कथं वा प्रत्यक्षत्वं, विशेषणतायाः सम्बन्धान्तरगर्भत्वात् अवश्यक्लृप्तकारणताकानुपलब्धेरेव करणत्वं नेन्द्रियस्येत्यत्राह,—

**अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।**
**प्राग्ग्रन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥ २२ ॥**

अवच्छेदग्रहस्य प्रतियोगिग्रहस्याभावप्रत्यक्षहेतुत्वात् नियमतः सविकल्पकज्ञानसामग्रीसत्त्वान्न निर्विकल्पकत्वं, घटादिग्रहे तु निर्विकल्पकमेव प्रथमतः, विशिष्टज्ञानहेतुविशेषणज्ञानाभावात्,

---

अनुपलब्धेरित्यादि यथाचादौ अनुपलब्ध्या घटाभावज्ञानं ततः तादृशज्ञानरूपोपनय-सन्निकर्षात् अभावांशे अलौकिकभानात्मक-घटाभाववद्भूतलमिति विशिष्टबुद्धिसम्भवात् न विशिष्टबुद्ध्यनुपपत्तिरिति भावः। विशेषणीभूताभावांशेऽलौकिकभानं दृष्टान्तेन द्रढयति प्रागर्जितेति। तथा दर्शनादिति घटादिविशिष्टबुद्धौ निर्विकल्पकविषयीभूतस्यैव घटादेर्भानदर्शनादित्यर्थः। तथाच अभावस्य निर्विकल्पकास्वीकारे इन्द्रियमात्रेण तद्विशिष्टबुद्ध्यसम्भव इति भावः। नन्विन्द्रियेणैवाभावनिर्विकल्पकमुत्पद्यतां नानुपलब्ध्या इत्यत आह अभावेनेन्द्रियप्रत्यासत्तेरिति, नन्वभावस्य संयोगादिसम्बन्धाभावात् विशेषणता-रूपः सम्बन्धः कल्प्य इत्यत आह विशेषणताया इति, सम्बन्धान्तरगर्भत्वादिति किञ्चित्-सम्बन्धावच्छिन्न-किञ्चिद्धर्मनिरूपितवृत्तित्वरूपत्वादित्यर्थः, तथाचाभावस्य सम्बन्धान्तराभावात् विशेषणताया अपि बाध इति भावः। अवश्यक्लृप्तेति अभावनिर्विकल्पके अगत्यापि अवश्यक्लृप्तकारणताकानुपलब्धेरित्यर्थः, करणत्वं विशिष्टबुद्धावपि करणत्वम्। अवच्छेद-ग्रहध्रौव्यादिति मूलं विवृणोति अवच्छेदग्रहस्येति, नियमत इति प्रतियोगिज्ञानस्य अभावज्ञानात् पूर्वमपेक्षणीयत्वे प्रतियोगिज्ञानरूपविशेषणज्ञानात् नियमतो विशिष्ट-बुद्धिकारणसत्त्वादित्यर्थः, ध्रौव्यादिति पञ्चम्यर्थान्वयानुरोधेन पूरयति न निर्विकल्पकत्व-मिति। तात्पर्यार्थं स्फुटयितुमाह घटादिग्रहे त्विति विशेषणज्ञानाभावादिति, तथाच

प्रतियोग्यनुपस्थितस्याभावस्य भानाभ्युपगमे तु अभावस्यापि निर्विकल्पकविषयतेति सिद्धसाधनम्। सम्बन्धान्तरेऽनवस्थानात् स्वरूपमेवाभावस्याधिकरणेन सम्बन्धः, वैशिष्ट्यस्याभावसम्बन्धस्याङ्गीकृतस्यापि सम्बन्धधारायामनवस्थानात् स्वरूपसम्बन्धस्वीकारस्यावश्यम्भावात्, इन्द्रियसम्बद्धविशेषणताया घटाभावादिप्रत्यक्षे सन्निकर्षतया कल्पनात्। न चेदेवं, तदाऽनुपलब्धिकरणतापक्षेऽपि अन्यप्रकारोदुर्घटः, तथाहि सर्वैरेव प्रमाणैः परम्परया निर्विकल्पकविषय एव गृह्यते, अनुमानादावपि वह्न्यादेः पूर्वं कदाचिन्निर्विकल्प-

---

यत्र प्रकारान्तरेण विशेषणज्ञानमस्ति तत्र न निर्विकल्पकापेक्षा इति नेन्द्रियप्रयोज्यप्रकारता निर्विकल्पकप्रयोज्येतिनियमः येन निर्विकल्पकाप्रयोज्यत्वेनाभावविषयतयाम् इन्द्रियप्रयोज्यत्वाभावः साधनीय इति भावः। अग्रोच्ये सिद्धसाधनमिति मूलं विवृणोति प्रतियोग्यनुपस्थितस्येति सिद्धसाधनमिति तथाचायं भावः अभावबुद्धिसामान्यं प्रति प्रतियोगिग्रहस्य हेतुत्वे अभावनिर्विकल्पकासिद्धिः प्रतियोगिज्ञानरूपविशेषणज्ञानादेव नियमतः प्रतियोगिविशिष्टाभावबुद्ध्युदयात्, प्रतियोगिज्ञानस्याहेतुत्वे अभावनिर्विकल्पकसत्त्वेऽपि इन्द्रियादेव तदुत्पत्तिः सम्भवति। ननु अभावे इन्द्रियसम्बन्धरूपसन्निकर्षासम्भवात् कथमिन्द्रियेण अभावनिर्विकल्पकसम्भव इत्यत आह मूले सम्बन्धान्तरेऽनवस्थानादिति, एतन्मूलं विवृणोति टीकायां सम्बन्धान्तरेऽनवस्थानात् इति, सम्बन्धान्तरे स्वरूपातिरिक्तसम्बन्धस्याभावसम्बन्धत्वे, अनवस्थानादिति यथा संयोगसम्बन्धस्य सम्बन्धान्तरं समवायः तथा अतिरिक्ताभावसम्बन्धस्यापि सम्बन्धान्तरम् अवश्यमङ्गीकर्त्तव्यम् एवं तस्य तस्यापि इत्यनवस्थाप्रसङ्गात्। स्वरूपमेवेति, तथाच स्वरूपसम्बन्धश्च नातिरिक्तः किन्तु तत्तत्कालावच्छिन्न-तत्तद्देशस्वरूप एव। न च स्वरूपसम्बन्धस्यापि सम्बन्धान्तरम् अवश्यवक्तव्यम् एवं तस्य तस्यापीत्यनवस्था तदवस्थैवेति वाच्यम्। स्वरूपसम्बन्धस्य सम्बन्धान्तरं स्वात्मकमेव नातिरिक्तं इत्यनवस्थाविरहात्। वैशिष्ट्यनाम्नोऽतिरिक्ताभावसम्बन्धस्य स्वीकारेऽपि तत्सम्बन्धधारायाम् अनवस्थाभयेन तादृशवैशिष्ट्यस्वरूपसम्बन्धस्य सम्बन्धः स्वरूपसम्बन्ध एव नातिरिक्तः इति स्वरूपस्य सम्बन्धत्वं अवश्यस्वीकार्य्यं अभावस्य स्वरूपसम्बन्ध एव इति कल्पनमुचितमित्याशयेनाह वैशिष्ट्यस्येति। इन्द्रियसम्बद्धविशे-

कस्वीकारात्, घटाभाववद्भूतलमित्यादिविशिष्टप्रत्ययबलात् अभावेनाधिकरणस्य प्राप्तेर्भवतापि स्वीकारात् ॥ ३२ ॥

स्तवकार्थसंग्राहकश्लोकमाह,—

प्रत्यक्षादिभिरेभिरेवमधरोदूरे विरोधोदयः
प्रायोयन्मुखवीक्षणैकविधुरैरात्मापि नासाद्यते ।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवम्
देवानामपि देवमुन्नवदतिश्रद्धाः प्रपद्यामहे ॥२३॥

इति तृतीयः स्तवकः ।

यस्येश्वरस्य मुखनिरीक्षणैकविधुरैर्धर्मिग्राहकमानबाधितैः प्रत्यक्षादिभिरात्मैव नासाद्यते, विरोधोदयो यतोऽधरः अतएव

---

पपत्ताया इति इति यत्सम्बन्धानुयोगिकस्वरूपसम्बन्धश्चेत्यर्थः । न चैदृशोऽपि दुर्घटः इति मूलं विवृणोति, न चैदृशमिति, तथाचायं भावः यत् प्रमाणं भवति तत् साक्षात् परम्परया वा निर्विकल्पकविषयग्राहकं भवति इति नियमात् अनुमानादिकमपि परम्परया निर्विकल्पकविषयमेव ग्राहयति, एवञ्च अनुपलब्धिः यदि प्रमाणं स्यात् तदा तस्याः साक्षात् परम्परया वा निर्विकल्पकविषयीभूतस्याभावस्य ग्राहकत्वमुचितम् न तु निर्विकल्पकमात्रजनकत्वमिति । न चानुपलब्ध्या निर्विकल्पकमेव जन्यते, प्रतियोग्यनुपलब्धितस्य तस्य ज्ञातुमशक्यत्वात् अशक्यत्वे वा किमपराद्धमिन्द्रियैरिति । घटाभाववद्भूतलमिति विशिष्टप्रत्ययानुरोधेनापि अभावस्य अधिकरणेन सह सम्बन्धः अवश्यमङ्गीकार्य इत्याह घटाभाववद्भूतलमित्यादीत्यलमधिकेन ॥ २२ ॥

मुखनिरीक्षणेति मुखनिरीक्षणं स्वरूपग्रहः स च आत्म परमेश्वरात्मकधर्मिस्वरूप:, तद्विधुरैः तद्राहित्यैरित्यर्थः, विधुरपदं बाधितपरम् । प्रत्यक्षादिभिरिति ईश्वराभावसाधकत्वेनोपन्यस्तैः योग्यानुपलब्ध्यादिभिरित्यर्थः, आत्मैव ईश्वराभावबोधप्रयोजकतावच्छेदकस्य रूप: स्वभावः, स च क्वचित् नासधीत्वं क्वचित्प्रमाणान्तरासाभावादिकम्,

दूरे, सर्वमनुविधेयं वश्यं यस्येति, असमा स्वच्छन्दा चेतनान्तराप्रयोज्या या लीला सैवोत्सवो यस्य स तथा, दुःखाभावैकनिदानत्वात्, अतएव उद्भवदतिभद्राः, देवानामपि देवं स्तुत्यं, प्रपद्यामहे ॥ २३ ॥

इति तृतीयस्तबकव्याख्यानम्।

---

## चतुर्थः स्तबकः।

सत्त्वेऽपि तस्याप्रमाणत्वात् इति तुरीयविप्रतिपत्तिः। ईश्वरो न प्रमाणं तज्ज्ञानस्यागृहीतग्राहित्वाभावेन प्रमात्वाभावात्, ईश्वरस्य प्रमाकर्तृत्वं प्रमाकरणत्वञ्च नास्तीति अप्रमाणपुरुषस्य वचः कः श्रद्दध्यादित्यत आह,—

---

विरोधोदयः ईश्वराभावबोधोत्पत्तिः, अधर इति नोत्पद्यत इत्यर्थः। दूरे अत्यासन्नोऽपि नेत्यर्थः, प्रायःपदं बाहुल्यार्थकं, तथाच ईश्वराभावसाधकत्वेनोपन्यस्तानि सर्वाणि प्रमाणानि धर्मिग्राहकमानबाधितानीति भावः। लीला सुखादिरूपा, उत्सवः सम्पदादीनां आनन्दजनिकेत्यर्थः। अत्र हेतुमाह दुःखाभावैकेति सम्पदादीनामित्यादिः। उद्भवदतिभद्राः उद्भवन्ती अतिभद्रा मोक्षरूपफलजनकज्ञानविषयात्मतत्त्वबोधकागमप्रामाण्यबुद्धिर्येषां ते। प्रपद्यामहे श्रवण-मननादिभिराराधयाम इति ॥ २३ ॥

इति श्रीकामाख्यानाथ-तर्कवागीशविरचितायां कुसुमाञ्जलिव्याख्याविवृतौ तृतीयस्तबकव्याख्याविवृतिः समाप्ता।

---

चतुर्थीं विप्रतिपत्तिमुत्थापयति, सत्त्वेऽपीति, तथाचैवं विप्रतिपत्तिः, ईश्वरः प्रमाणं न वेति, अत्र विधिकोटिः नैयायिकानां, निषेधकोटिः दिगम्बराणाम्। अप्रमाणत्वं साधकं दर्शयति ईश्वरो न प्रमाणमिति, अगृहीतग्राहित्वाभावेनेति, अगृहीतग्राहित्व-

अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक् ।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥ १ ॥

अपूर्वदृक्त्वं अगृहीतग्राहित्वं न प्रमालक्षणं धारावहनबुद्ध्यव्याप्तेः इदं रजतमितिभ्रमातिव्याप्तेश्च। स्वमते लक्षणमाह यथार्थ इति। अनपेक्षतयेति स्मृतेर्जनकानुभवसमानविषयकतया तत्प्रामाण्याधीनप्रामाण्यकतया सापेक्षत्वात् तत्र न प्रमाव्यवहारस्तान्त्रिकाणामिति ॥ १ ॥

---

स्वोत्पत्तिकालीनध्वंसप्रतियोगिस्वसमानाधिकरणज्ञानाविषयविषयकत्वम्, एतदेव पूर्वपक्षिणां प्रमाज्ञानलक्षणम्, ईश्वरज्ञानस्य नित्यत्वात् सर्वविषयकत्वाच्च एतादृशलक्षणासम्भवात् न प्रमात्वम्। न चैतादृशलक्षणस्य ईश्वरज्ञाने अव्याप्तत्वात् प्रमायाः लक्षणान्तरं वाच्यमिति वाच्यम्। स्मृतेरपि प्रमात्वप्रसङ्गात्। प्रमाणशब्देन कर्तृकरणव्युत्पत्त्या प्रमाकर्तृत्वं प्रमाकरणत्वञ्च बोध्यते तद्द्वयमपि ईश्वरे नास्तीत्याह, ईश्वरस्येति, प्रमाकर्तृत्वं प्रमाश्रयत्वम्। मूले अपूर्वदृगिति अपूर्वस्य अगृहीतस्य दृक् दर्शनं ज्ञानमिति यावत्, भावप्रधाननिर्देशः, तथाच अपूर्वदृक्त्वम् अगृहीतग्राहित्वम् अलक्षणं न प्रमालक्षणम्, अप्राप्तेः अव्याप्तेः, अधिकप्राप्तेः, अतिव्याप्तेः। टीकायां धारावहनबुद्ध्यव्याप्तेरिति, ननु "न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति परेषां सिद्धान्तात् अनुभवमात्रस्य स्वोत्पत्तिक्षणविषयकत्वात् द्वितीयादिप्रत्यक्षेऽपि अगृहीतग्राहित्वम् इति चेन्न सर्वत्र ज्ञाने कालभाने मानाभावात् क्षणानामतीन्द्रियत्वात् सर्वत्र ज्ञाने पूर्वं कालस्योपनयसन्निकर्षप्रमाणाभावाच्च। न च स्वप्रकाशवादिनये पूर्वज्ञानाविषयस्य स्वस्य उत्तरज्ञानेन विषयीकरणात् उत्तरज्ञानस्याऽगृहीतग्राहित्वमिति वाच्यम्। पूर्वज्ञानाविषयस्वातिरिक्तविषयकत्वरूपप्रमात्वस्य तत्राभावात्। ननु यथार्थानुभववद्यथार्थस्मृतिरपि कथं न प्रमा स्यात् यथार्थत्वस्यैव तन्त्रत्वात् अनुभवत्वस्य व्यर्थत्वादित्यत आह, अनपेक्षतयेति, तत्प्रामाण्याधीनप्रामाण्यकतयेति स्मृतेः संस्कारद्वारीभूतानुभवानतिरिक्तविषयकानुभवयाथार्थ्यसापेक्ष्ययाथार्थ्यतया, तान्त्रिकाणामितीति, तथाच स्मृतौ महर्षिभिः प्रमात्वाव्यवहारेण प्रमालक्षणे अनुभवत्वस्वीकृतत्वात्, इदं परिभाषामात्रम्। वस्तुतस्तु यथार्थज्ञानत्वमेव प्रमात्वं, यथार्थत्वञ्च तद्वति तत्प्रकारकत्वं, स्मृतेः प्रमात्वमिष्टमेवेति भावः ॥ १ ॥

ननु धारावाहिके नाव्याप्तिः, ज्ञानेन हि विषयनिष्ठो धर्मः कश्चिज्जननीयः, अन्यथा ज्ञानस्य विषयं प्रति नियमो न स्यात्, तथाच तमादायागृहीतग्राहित्वमेव। किञ्च स धर्मस्तदुपादानज्ञानजन्यो न वा, आद्ये उपादानज्ञानस्य उपादानविषयतानियमार्थं धर्मान्तरस्वीकारे तत्राप्येवमित्यनवस्था, द्वितीये कार्य्यत्वं हेतुः तत्रैव उपादानज्ञानजन्यत्वव्यभिचारीति नेश्वरस्य क्षित्यादिकर्तृतया सिद्धिरित्यत्राह,—

**स्वभावनियमाभावादुपकारो हि दुर्घटः।**
**सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥**

स्वभावविशेष एव विषयतानियामकः, अन्यथा ज्ञातता-

---

ममस्तु न विशिष्टज्ञानं किन्तु धर्मस्मरणं धर्मिणोऽनुभवः इति ज्ञानद्वयं, तत्र धर्मस्मरणं गृहीतग्राहि, धर्म्यनुभवस्य प्रमात्वमिष्टमेवेति भवे नातिव्याप्तिरिति धारावाहिकेऽव्याप्तिमुद्धरति, नन्विति, विषयनिष्ठोधर्म इति ज्ञातताख्योधर्म इत्यर्थः, अन्यथा ज्ञातताख्यधर्मानङ्गीकारे, विषयं प्रति नियमो न स्यादिति किञ्चिज्ज्ञानं किञ्चिद्विषयकमेवेति नियमो न स्यात्, तादृशधर्मस्वीकारे च यज्ज्ञानं यन्निष्ठज्ञातताजनकं तज्ज्ञानं तन्निष्ठविषयताकमिति नियम उपपद्यते, तथाच घटज्ञानजन्यज्ञातताख्यः घटज्ञानसम्बन्धः घटज्ञानविषयतानियामक इति घटज्ञानविषयत्वं घटज्ञानजन्यज्ञातताख्यसम्बन्धाश्रये घट एव वर्तते न तु घटज्ञानजन्यज्ञातताख्यसम्बन्धानाश्रये पट इति भावः। तमादायेति तथाच पूर्वज्ञानोत्पन्नज्ञातता स्वसमानकालोत्पन्नद्वितीयादिज्ञाने भासते इति पूर्वपक्षिणां सिद्धान्तात् पूर्वागृहीतां प्रथमज्ञानजन्यज्ञाततामादाय द्वितीयज्ञानस्य द्वितीयज्ञानादिजन्यज्ञाततामादाय तृतीयादिज्ञानस्यागृहीतग्राहित्वरूपं प्रमात्वमिति भावः। ज्ञानस्य विषयनियमार्थं ज्ञातताख्योधर्मः अवश्यं नैयायिकैरपि मन्तव्य इत्यभिमन्यमानो भट्टः क्षितिः सकर्तृका कार्य्यत्वादिति नैयायिकानुमानं दूषयितुमुपक्रमते किञ्चेति, तदुपादानज्ञानजन्यो न वेति विषयतानियामको यो ज्ञातताख्यो धर्मः तस्य किं उपादानज्ञानजन्यत्वं उत उपादानज्ञानसामग्री [illegible]

धानेऽपि नियमानुपपत्तिः इति स्वभाव एव नियामकस्तत्रेति। किञ्च वर्त्तमानविषये तदुत्पत्तावपि अविद्यमाने विषये ज्ञाततायाः उपादानविरहात् अनुत्पत्तौ विषयतानियमानुपपत्तिरिति स्वभाव एव तत्र नियामक इति ॥ २ ॥

ननु क्रियया कर्मणि किञ्चिज्जननीयमितिव्याप्तेर्ज्ञानक्रिययापि विषयनिष्ठोधर्मोजननीय इत्यत आह,—

---

इत्यर्थः, अनवस्थेति, तथाच घटज्ञानविषयतानियामको यो घटनिष्ठज्ञातताख्यो धर्मः तस्य घटरूपोपादानज्ञानजन्यत्वे घटरूपोपादानज्ञानस्य विषयतानियमार्थं ज्ञाततान्तरमवश्यमङ्गीकार्यं एवं तादृशज्ञाततान्तरजनकीभूतोपादानज्ञानस्य विषयतानियमार्थं ज्ञाततान्तरमित्यनवस्थेति भावः। द्वितीय इति घटादिज्ञानविषयतानियामकस्य घटादिनिष्ठज्ञातताख्यधर्मस्य घटादिज्ञानसामग्रीचक्षुरादिजन्यत्व इत्यर्थः। व्यभिचारीति तथाच क्षितिः सकर्तृका कार्यत्वादित्यत्र सकर्तृकत्वं उपादानगोचरापरोक्षज्ञान चिकीर्षा-कृतिमज्जन्यत्वं एवञ्च उपादानज्ञानादिमज्जन्यत्वसिद्धौ विशेषणीभूतोपादानज्ञानजन्यत्वस्यापि सिद्धेः उपादानज्ञानजन्यत्वाभाववति ज्ञातत्वे कार्यत्वस्य वर्त्तमानत्वात् व्यभिचारित्वमिति भावः। मूले स्वभावनियमाभावादिति स्वभावस्य नियामकत्वाभावादित्यर्थः, उपकारः ज्ञातता, टीकायां स्वभावविशेष एवेति स्वरूपसम्बन्धविशेष एवेत्यर्थः, अन्यथा स्वभावविशेषस्य नियामकत्वानङ्गीकारे, नियामकत्वस्यैवेति तथाच घट इति ज्ञाने घटे ज्ञातताजन्यते न तु पटे इत्यत्र स्वभावस्य नियामकत्वं त्वयाप्यवश्यं वाच्यं एवञ्च विषयत्वे तस्यैव नियामकत्वं किमतिरिक्तज्ञातताऽस्वीकारेणेति भावः। मूले सुघटत्वेऽपीत्यादि, अन्यथा स्वभावस्य नियामकत्वाभावे, सति विद्यमाने अर्थे विषये ज्ञाततायाः सुघटत्वेऽपि असति अविद्यमाने विषये का गतिः गतिर्नास्तीत्यर्थः। तथाच समवेतस्यैवकार्यस्य प्रति स्वस्य तादात्म्यसम्बन्धेन हेतुतया घटादिसमवेतज्ञातताम्प्रत्यपि घटादेः तादात्म्यसम्बन्धेन हेतुत्वात् अतीतघटादिस्थले घटादिरूपकारणाभावात् न ज्ञातताजन्म इति भावः ॥ २ ॥

अनुमानेन ज्ञाततासिद्धिमाशङ्कते नन्विति, इतिव्याप्तेरिति क्रिया कर्मनिष्ठधर्मजनिका क्रियात्वात् ग्रामरूपकर्मनिष्ठसंयोगजनकगमनक्रियावत् इति सामान्यव्याप्तेः

**अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया।**
**तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ ३ ॥**

क्रिया यदि धात्वर्थस्तदा शरेण गगनं युनक्ति इत्यत्र संयोगेन, गगननिष्ठकिञ्चिदजननात् अनैकान्तः, यदि करणव्यापारः क्रिया तदापीन्द्रियसंयोगादिना घटादिनिष्ठकिञ्चिदजननात् व्यभिचारः, अथ क्रिया स्पन्दस्तदा ज्ञानस्य स्पन्दानात्मकत्वादसिद्धिः। ननु ज्ञातोघटः साक्षात्कृतोघटः इत्यादि प्रत्यक्षमेव ज्ञाततायां मानमित्यत आह तद्वैशिष्ट्येति। सर्वत्र विशिष्टज्ञाने विशेषण-विशेष्ये तदुभयसम्बन्धो विषयः, स च सम्बन्धः क्वचित् संयोगादिः क्वचित्तु स्वरूपं, तदिह घटज्ञानमित्यत्रैव घट-ज्ञानयोः स्वरूप एव सम्बन्धः

---

तीत्यादौ गमनक्रियाया ग्रामरूपकर्मनिष्ठसंयोगरूपफलजनकत्वेऽपि घटं जानातीत्यादौ ज्ञानक्रियाया न घटरूपकर्मनिष्ठफलजनकत्वमिति वाच्यम्। तथा सति घटस्य क्रियाजन्यफलशालित्वरूपकर्मत्वानुपपत्तेः। मूले न च लिङ्गमिह क्रियेति, क्रियेति भावप्रधाननिर्देशः, तथाच क्रियात्वम् इह ज्ञाततारूपधर्मे न लिङ्गं नानुमापकम् इत्यर्थः, अत्र क्रियात्वं किं धात्वर्थत्वम्, उत करणव्यापारत्वम्, अथवा स्पन्दत्वं, नाद्य-द्वितीयौ इत्याह अनैकान्तादिति, न तृतीयः इत्याह असिद्धेर्वेति, तथाच विशेषाभावकूटस्य सामान्याभावनिर्वाहकत्वात् क्रियात्वं न लिङ्गमिति सामान्याभावसिद्धिः। एतदेव विवृणोति टीकायाम् क्रिया यदीत्यादि, क्रिया क्रियात्वं, धात्वर्थः धात्वर्थत्वं, गगननिष्ठेति शरेण घटं युनक्ति इत्यत्र शरसंयोगरूपक्रियायाः अवयवविभागरूपफलजनकत्वसम्भवात् गगनपर्यन्तानुसरणं, तथाच गगनस्य नित्यत्वेन अवयवविभागासम्भव इति भावः। करणव्यापार करणव्यापारत्वं, क्रिया क्रियात्वम्, इन्द्रियसंयोगादिनेति आदिना परामर्शस्य, अतिदेशवाक्यार्थस्मृतेः, पदार्थस्मृतेश्च परिग्रहः। न चेन्द्रियसंयोगेन स्वजन्यज्ञानद्वारा घटादौ ज्ञातताजननात् कथं व्यभिचार इति वाच्यम्। वस्त्रेण घटमाच्छादयतीत्यादौ वस्त्रसंयोगेन घटादौ किञ्चिदजननेन व्यभिचारात्। अथ क्रियेति क्रिया क्रियात्वं, स्पन्दः स्पन्दत्वं, ज्ञानस्य ज्ञानरूपपक्षस्य, स्पन्दानात्मकत्वात् स्पन्दत्वरूपहेत्वभावात्, असिद्धिः ज्ञानक्रिया कर्मनिष्ठकिञ्चिज्जनिका क्रियात्वादित्यनुमाने स्वरूपासिद्धिरित्यर्थः। ज्ञाततारूपधर्मे

ज्ञातो घटइत्यत्रापि भासते, अन्यथा दृष्टोघटः कृतोघटं इत्यत्र दृष्टता-कृततयोरप्यापत्तेः स्वभावसम्बन्धादुपपत्तिस्तुल्या ॥ ३ ॥

तदुच्यते,—

**अर्थेनैव विशेषो हि निराकारतया धियाम्।**
**क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ४ ॥**

यथा घटादिना ज्ञाने विशिष्टधीः यथा च क्रिययैव कर्मणां

---

प्रत्यक्षप्रमाणमाशङ्कते नन्विति, ज्ञाततायां मानमिति तथाच ज्ञातो घट इति प्रत्यक्ष-प्रतीतौ ज्ञातत्वस्य विषयत्वात् प्रत्यक्षमेव तत्र प्रमाणमिति भावः। मूले तद्वैशिष्ट्यमित्यादि, तद्वैशिष्ट्यप्रकाशकत्वात् तस्य ज्ञानस्य वैशिष्ट्यप्रकाशकत्वात् विषयतास्वरूपसम्बन्धविषयक-त्वात् अधिके ज्ञाततारूपधर्मे, नाध्यक्षानुभवः न प्रत्यक्षानुभवः, प्रमाणमिति शेषः। टीकायां घटज्ञानमित्यत्रेवेति तथाच यथा घटज्ञानम् इति प्रतीतौ ज्ञाने घटस्य विषयित्वरूपसम्बन्धीभासते नातिरिक्तसम्बन्धः तथा ज्ञातो घट इतिप्रतीतावपि घटे ज्ञानस्य विषयतारूपसम्बन्धः न त्वतिरिक्तज्ञातत्वादिकम्। ज्ञाततास्वीकारे प्रतिबन्धि-माह अन्यथेति ज्ञातो घट इति प्रतीतौ अतिरिक्तज्ञाततायाःस्वीकारे इत्यर्थः। दृष्टो घट इति प्रतीतौ यदि स्वरूपसम्बन्ध एव भासते न त्वतिरिक्तंदृष्टत्वं तर्हि ज्ञातो घटं इत्य-त्रापि स्वरूपसम्बन्धी भासते न त्वतिरिक्तज्ञातत्वं, युक्तेस्तौल्यादित्याह स्वभावसम्बन्धादिति स्वरूपसम्बन्धादित्यर्थः, तथाच दृष्टो घट इत्यादौ इच्छादेरिव ज्ञातो घट इत्यत्रापि ज्ञानस्य विषयतारूपसम्बन्धीभासते न त्वतिरिक्तज्ञाततेति भावः ॥ ३ ॥

तदुच्यत इति तत् परितोषाय आचार्यैः पुनः स्पष्टमुच्यत इत्यर्थः। मूले अर्थेनैवेति अर्थपदं विषयपरम्, अभेदे तृतीया, विशेषः व्यावर्त्तकः विशेषणमिति यावत्, विषया-भिन्नो व्यावर्त्तकः इति समुदितार्थः, निराकारतयेति विशेषणे तृतीया, निराकाराणा-मित्यर्थः, निरवयवानां धियां विषय एव व्यावर्त्तकः इति समुदिततात्पर्यम्। निरा-कारत्वमित्यनेन ज्ञानानां व्यावर्त्तकान्तरं नास्तीति सूचितम्, अर्थेनैवेति दृष्टान्तविषयीकं, तथाच यथा घटज्ञानमिति प्रतीतौ ज्ञानस्य विशेष्यत्वं घटस्य विषयित्वाख्यस्वरूपसम्बन्धेन विशेषणत्वं तथापि अवगमङ्गीकार्यं तथा ज्ञातो घट इति प्रतीतौ घटस्य विशेष्यत्वं ज्ञानस्य विषयताख्यस्वरूपसम्बन्धेन विशेषणत्वं न त्वतिरिक्तज्ञाततायाः, घटज्ञानमित्यत्र ज्ञानस्य विशेष्यत्वं घटस्य विशेषणत्वं ज्ञातो घट इत्यत्र विशेष्य विशेषणभाववैपरीत्यम्

घटादीनां व्यवहारेषु विशिष्टबुद्ध्यादिषु विशेषस्तथा ज्ञातो घट इत्यादौ ज्ञानेनैव घटादौ विशिष्टधीर्न धर्मान्तरादिति ॥ ४ ॥

ननु तथापि नेश्वरज्ञानं प्रमा प्रमाणजन्यत्वाभावात्, एवमीश्वरोन प्रमाता न वा प्रमाणं प्रमाकर्तृत्व-करणत्वयोरभावादत आह,—

**मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता।**
**तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥**

---

एतावानेव विशेषः इति भावः। क्रिययैवेति अत्र क्रियापदं कृतीच्छा-ज्ञानपरं, तृतीयार्थः अभेदः, विशेषः व्यावर्तकः विशेषणमिति यावत्, कृतीच्छाज्ञानाभिन्नं विशेषणमिति समुदितार्थः। व्यवहारेषु कृतो घटः इष्टो घटः ज्ञातो घट इत्यादिविशिष्टबुद्धिषु, कर्मणां विषयाणां घटादीनां, कृतीच्छा-ज्ञानादिकमेव विशेषणमिति समुदिततात्पर्यम्। कृतीच्छाग्रहणं दृष्टान्तार्थम्, अतएव ज्ञानेनैवेत्यनुक्त्वा क्रिययैवेत्युक्तम्। तथाच कृतो घट इष्टो घट इत्यत्र यथा विषयतासम्बन्धेन कृतेः इच्छायाश्च विशेषणत्वं न त्वतिरिक्तकृतत्वेष्टत्वयोः तथा ज्ञातो घट इत्यत्रापि ज्ञानस्य विषयत्वसम्बन्धेन विशेषणत्वं न त्वतिरिक्तज्ञाततायाः इति भावः। इममर्थं विवृणोति टीकायां यथा घटादिनेति, घटादिना विशेषणेन घटादिनेत्यर्थः, विशिष्टधीः घटज्ञानमिति विशिष्टधीः। यथा च क्रिययैवेति अत्रापि अभेदार्थे तृतीया, क्रियापदं कृत्यादिपरम् विशेष इत्यनेनान्वयः, तथाच कृतो घट इत्यादौ कर्मणां विषयाणां घटादीनां क्रिययैव कृत्यादिरेव विशेषः विशेषणम् इति समुदिततात्पर्यम्। ज्ञानेनैवेत्येवकारव्यावर्तनीयमाह न धर्मान्तरादिति न ज्ञातताख्यधर्मान्तरादित्यर्थः। न च अतिरिक्तज्ञाततानङ्गीकारे घटं जानातीत्यादौ कथं क्रियाजन्यफलशालित्वेन घटस्य कर्मत्वमिति वाच्यम्। तत्र कर्मताख्यकारकस्य भाक्तत्वेन विषयत्वस्यैव द्वितीयार्थत्वात् ॥ ४ ॥

प्रमाणजन्यफलस्य प्रमात्वात् ईश्वरज्ञानस्य नित्यत्वेनाफलत्वान्न प्रमात्वं, नापीश्वरः प्रमाणं प्रमाया अकारणत्वात्, अतएव प्रमासमवायिकारणत्वरूपप्रमाकर्तृत्वाभावात् न प्रमातृत्वमित्यादि शङ्कते, नन्वित्यादिना, प्रमाणजन्यत्वाभावादिति प्रमाणजन्यत्वाभावेन फलत्वाभावादित्यर्थः। कृतौ तद्वत्तेति तदाश्रयत्वमित्यर्थः, सविषयप्रकार्यकधात्

यथार्थानुभवत्वमेव प्रमात्वमजन्यत्वेऽपीश्वरज्ञानस्याविरुद्धं, प्रमातृत्वं प्रमासमवायित्वम् तच्च अकारणत्वेऽपि प्रमाया ईश्वरस्याविरुद्धम् । एवं प्रमया सदायोगव्यवच्छेदेन सम्बन्धितयेश्वरस्य प्रमाणत्वं न तु कारणत्वमपि तत्र नियामकमिति, "मन्त्रायुर्वेदवत् तत्प्रामाण्यमाप्तप्रामाण्यात्" इति सूत्रे ( न्याय सू० २।६८ ) ईश्वरस्य प्रामाण्यमुक्तं । न चेश्वरस्य पञ्चमप्रमाणत्वापत्त्या-विभागव्याघातः, प्रमाकरणाभिप्रायेण विभागसम्भवात् । न चेश्वरज्ञानस्य भ्रमविषयकत्वे भ्रमविषयावगाहित्वेन भ्रमत्वापत्तिरिति वाच्यम् । व्यधिकरणप्रकारकत्वाभावेनाप्रमात्वाभावात्, भ्रमनिष्ठं शुक्तिविशेष्यकत्वं रजतत्वप्रकारकत्वञ्च संदेव तदवगाहितया ईश्वरज्ञानस्य प्रमात्वाक्षतेः ॥ ५ ॥

---

योगे चाप्रयत्नस्यैव कर्तृप्रत्ययार्थत्वादिति भावः । प्रमया सदायोगव्यवच्छेदेन सम्बन्धितयेति कालविशेषावच्छेदेन विषयविशेषावच्छेदेन वा यः प्रमाया अयोगः अभावः तद्व्यवच्छेदस्तदभावस्तत्सम्बन्धितया तत्समवायवत्त्वेनेत्यर्थः, अभेदे तृतीया तदाश्रयं प्रमाणत्वमिति फलितार्थः । तथाच सर्वदा सर्वविषयकप्रमावत्त्वं प्रमाणत्वमीश्वरस्येति भावः । न तु कारणत्वमपि न तु प्रमाकरणत्वमपीत्यर्थः, तत्र नियामकमितीति अतःपरम् एतदभिप्रेत्येति पूरणीयं, तत्प्रामाण्यमिति वेदसामान्यप्रामाण्यमित्यर्थः, आप्तप्रामाण्यादिति अत्र आप्तपदं भ्रम-प्रमादादिशून्यवेदवक्तृपुरुषपरं, तस्य प्रामाण्यात् निर्भ्रमप्रामाण्यादित्यर्थः । पञ्चमप्रमाणत्वापत्त्या पञ्चमप्रमाणपदार्थत्वापत्त्या विभागव्याघातः प्रमाणपदार्थस्य चतुर्धा विभागव्याघातः । भ्रमविषयकत्वे सर्वविषयकत्वानुरोधेन भ्रमविषयकत्वे, भ्रमविषयावगाहित्वेनेति ज्ञानज्ञानस्य ज्ञानविषयविषयकत्वनियमादिति भावः । व्यधिकरणेति तथाच शुक्ताविदं रजतमिति ज्ञानस्य व्यधिकरणप्रकारकत्वेन भ्रमत्वेऽपि शुक्ती रजतत्वज्ञानवानिति ज्ञानं न भ्रमः प्रमाया एव विशिष्टविषयप्रतिष्ठया विशिष्टविषयोपरागेणैवानुव्यवसायः, भ्रमस्य विशिष्टविषयाप्रतिष्ठया न विशिष्टविषयोपरागेणानुव्यवसायः किन्तु विलक्षणविषयत्वोपरागेणैव, अतएव भ्रान्तिभ्रमस्य न भ्रान्तत्वम्, एवञ्च ईश्वरज्ञानस्य सर्वविषयकत्वानुरोधेन भ्रमविषयकत्वेऽपि विषयतया [illegible] इति भावः ॥ ५ ॥

स्तवकार्थसंग्राहकश्लोकमाह,—

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः॥६॥

इति चतुर्थः स्तवकः।

भूतार्थानुभवे यथार्थानुभवे, साक्षात्कारिणि प्रत्यक्षे, निविष्टो विषयीभूतो निखिलप्रस्ताविवस्तूनां नानापदार्थानां क्रमो यस्य स तथा अनुभवविषयसकलविश्वक इत्यर्थः, नित्ययोगिनि सदातनत्वयुक्ते, अतएवेन्द्रियाणां द्वाराणामनपेक्षा स्थितिर्यस्य, लेशतोऽप्यंशतोऽपि अदृष्टिर्विशेषादर्शनं तन्निमित्तिका या दुष्टिः राग-द्वेष-मोहात्मिका तद्विगमेन प्रभ्रष्टः शङ्कातुषः वेदाप्रामाण्यशङ्कालेशो यस्मादित्यर्थः, प्रमाणं शिवः, एवम्भूते तत्राप्रामाण्यशङ्कारूपकलङ्कवद्भिः पाषण्डैः किं कर्त्तव्यमित्यर्थः॥ ६॥

इति तुरीयस्तवकव्याख्यानम्।

---

नानापदार्थानां क्रम इति अत्र क्रमशब्दः सामान्य-विशेषवैशिष्ट्यपरः, तत्र निविष्टस्तासौ निखिलप्रस्तावचस्तुक्रमश्चेति कर्मधारयः, यस्येति पूरितं, भूतार्थानुभवे इत्यनेनान्वयः, न तु यथाश्रुतस्य बहुव्रीहिसमासान्यपदार्थपरता, तथा सति क्रमपदार्थे तदन्वयबाधादसङ्गतिः भूतार्थानुभवे ईश्वरीयत्वालाभश्चेति। किं कर्त्तव्यमितीति किमनिष्टं कर्त्तव्यमितीत्यर्थः॥ ६॥

इति श्रीकामाख्यानाथ-तर्कवागीशविरचितायां कुसुमाञ्जलिविवृतौ
चतुर्थस्तवकविवृतिः।

## पञ्चमः स्तवकः ।

तत्साधकप्रमाणाभावात् इति पञ्चमविप्रतिपत्तिः, नन्वीश्वरे साधकप्रमाणमेव नास्तीत्यत्राह ।

**कार्य्यायोजन-धृत्यादेः पदात् प्रत्ययतः श्रुतेः ।**
**वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥१॥**

क्षित्यादि सकर्तृकं कार्य्यत्वात् घटवत् सकर्तृकत्वञ्च उपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमज्जन्यत्वम् । आयोजनं कर्म एवञ्च सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म चेतन-

---

पञ्चमीं साधकप्रमाणाभावविप्रतिपत्तिमुत्थापयति, तत्साधकेत्यादि विप्रतिपत्तिस्तु क्षितिः सकर्तृका न वेत्येवंरूपा । समाधत्ते मूले कार्य्यायोजनेत्यादि, टीकायां क्षित्यादीति, तादात्म्यसम्बन्धेन व्याप्यतायां विवादात् कार्य्यपदस्य धर्मपरतामाह, कार्य्यत्वादिति । अथ क्षितिः सकर्तृका कार्य्यत्वादित्यनुमानेन क्षितित्वावच्छेदेन सकर्तृकत्वं साधनीयं क्षितित्वसामानाधिकरण्येन वा, नाद्यः परमाणौ बाधात् । न द्वितीयः घटादावंशतः सिद्धसाधनापत्तेः, जन्यक्षितित्वावच्छेदेन सकर्तृकत्वस्य साधनीयत्वे परमते सकलजन्यक्षितेरप्रसिद्ध्या जन्यपदस्य निरर्थकत्वापत्तेः, जन्यत्वस्यैव पक्षतावच्छेदकत्वसम्भवे क्षितित्वस्य पक्षतावच्छेदककोटौ व्यर्थत्वाच्च । न च तर्हि जन्यत्वमेव पक्षतावच्छेदकम् इति वाच्यम् । पक्षतावच्छेदक-हेत्वोरभेदप्रसङ्गादिति चेत्, न, स्वरूपसम्बन्धविशेषरूपकार्य्यत्वस्यैव पक्षतावच्छेदकत्वात् प्रागभावप्रतियोगित्वरूपकार्य्यत्वस्यैव हेतुत्वेन तयोर्भेदात् अवच्छेदावच्छेदेन साध्यसिद्धेरुद्देश्यत्वान्नांशतः सिद्धसाधनम् ।

उपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमज्जन्यत्वमिति, उपादानज्ञान-चिकीर्षा-कृतीनामिव तादृशज्ञान-चिकीर्षा-कृतिमतोऽपि अन्वय-व्यतिरेकाभ्यां हेतुत्वावगमादिदम् । उपादानज्ञान-चिकीर्षा-कृतिजन्यत्वमेव साध्यं पर्य्यवसितम् । न च तादृशकृतिजन्यत्वस्य पर्य्यवसितसाध्यत्वे नैयर्थ्यासिद्धिरिति वाच्यम् । एतदनुमानेन सर्गाद्यकालीनक्षित्यङ्कुरस्यापि कृतिजन्यत्वे सिद्धे तादृशाङ्कुरजनककृतिः द्व्यणुकाश्रिता गृहत्वात्

प्रयत्नपूर्वकं कर्मत्वात् अस्मदादिशरीरक्रियावत्। धृतीति ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं, धृतिमत्त्वात् वियति विहङ्गमधृतकाष्ठवत् धृतिश्च गुरुत्ववतां पतनाभावः। धृत्यादेरित्यादिपदात् नाशपरिग्रहः, ब्रह्माण्डादि प्रयत्नवद्विनाश्यं विनाशित्वात् पाट्यमानपटवत्। पदात् पद्यतेऽनेनेति व्युत्पत्त्या पदं व्यव-

---

इत्यनुमानेन अस्मदादिबाधात् ईश्वरस्य सिद्धिः। उपादानज्ञानजन्यत्वं, चिकीर्षाजन्यत्वं, कृतिजन्यत्वञ्च एतत्त्रितयमेव विनिगमकाभावात् साध्यम्, अथवा उपादानज्ञान-चिकीर्षा-कृतिजन्यत्वपदेन उपादानज्ञान-चिकीर्षा कृतिप्रयोज्योत्पत्तिमत्त्वं कार्यं प्रति उपादानज्ञानत्वादिप्रत्येकधर्मेण कारणत्वेऽपि कार्योत्पत्तौ सामग्र्येव प्रयोजकत्वात् प्रत्येकधर्मावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्य उत्पत्तौ विरहात्। न च प्रवृत्तिं प्रति उपादानज्ञानस्य चिकीर्षायाश्च कारणत्वेन कार्यसामान्यं प्रत्यकारणत्वात् कार्यसामान्ये कथमुपादानज्ञान-चिकीर्षा-जन्यत्वमिति वाच्यम्। प्रवृत्तिद्वारा कार्यसामान्येऽपि उपादानज्ञान-चिकीर्षा-जन्यत्वमिति मतेनैतदभिधानात्। वस्तुतस्तु कृतिजन्यत्वमेव साध्यं कृतिजन्यत्वञ्च विशेष्यतासम्बन्धावच्छिन्नकृतित्वावच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यत्वं, तेनादृष्टद्वाराऽस्मदादिकृतिजन्यत्वमादाय न सिद्धसाधनम्। ननु जन्यं विशेष्यतासम्बन्धावच्छिन्नकृतित्वावच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यतावत् प्रागभावप्रतियोगित्वादित्यनुमानं फलितं तथा च ध्वंसे पक्षतावच्छेदकजन्यत्वाक्रान्ते विशेष्यतासम्बन्धावच्छिन्न-कृतित्वावच्छिन्न-जनकता निरूपितसमवाय-सम्बन्धावच्छिन्न-जन्यत्वरूपसाध्याभावात् बाध इति चेत्, न, समवायविशिष्टजन्यत्वस्यैव ध्वंसव्यावृत्तस्य पक्षतावच्छेदकत्वोपगमात्। न च ईश्वराधिकरणे ध्वंसे उक्तसाध्याभावेन व्यभिचार इति वाच्यम्। हेतावपि उक्तवैशिष्ट्यस्य निवेशनीयत्वात्। आयोजनमिति आयुज्यते संयुज्यते अनेनेति व्युत्पत्त्यादिः, सर्गाद्यकालीनेति, सर्गाद्यकालीनत्वविशेषणं सामानाधिकरण्येनावच्छेदकावच्छेदेन वा उभयथापि साध्यसिद्धेरुद्देश्यतासत्त्वं ईश्वरसिद्ध्यर्थम् अन्यथा द्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकास्मदादिदृष्टविशेषवदात्मक्रियान्तर्भावेण सिद्धसाधनापत्तेः। चेतनप्रयत्नपूर्वकं चेतनप्रयत्नप्रयोज्यमित्यर्थः, कर्मत्वादिति, अत्र कर्मत्वपदेन कार्यारम्भकसंयोगजनककर्मत्वं वाच्यम् अन्यथा कार्यानारम्भकवाय्वादिक्रियायां व्यभिचारापत्तेः क्रियानां चेतनप्रयत्नसाध्यत्वस्य ईश्वरानङ्गीकर्तृमतेऽसम्भवात्, तथा च द्व्यणुकावयवसंयोगजनक-

हारः, पटादिसम्प्रदायव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत्। प्रत्ययतः प्रामाण्यात्, वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत्। श्रुतेर्वेदात्, वेदः पौरुषेयो वेदत्वात् आयुर्वेदवत्। किञ्च वेदः पौरुषेयो वाक्यत्वात्

---

कार्य्यारम्भकक्रियामात्रस्य चेतनप्रयत्नसाध्यत्वनियमात् न व्यभिचारः, चेतनप्रयत्नासाध्यवाय्वादिक्रियया संयुक्तपरमाणुद्वयस्य द्व्यणुकानारम्भकत्वात् वायूनामनवरतपरिस्पन्दमानत्वेन तत्क्रियाजन्यसंयोगस्य प्रतिक्षणमेव नाशसम्भवात् अतएव पक्षे द्व्यणुकारम्भकत्वान्तर्भावः अन्यथा पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतास्थले कार्य्यानारम्भकवाय्वादिक्रियान्तर्भावेण सामानाधिकरण्येन बाधापत्तेः। परमाणुद्वयसंयोगीति संयोगि परमाणुद्वयविशेषणं स्वरूपकीर्त्तनमात्रम्। प्रयत्नवदधिष्ठितं प्रयत्नवत्संयुक्तं, धृतिमत्त्वात् गुरुत्ववन्निष्ठपतनाभाववत्त्वात्। प्रयत्नवद्विनाश्यं प्रयत्नवत्प्रयोज्यनाशप्रतियोगि। पतने प्रति नायत इत्यर्थः। पटादिसम्प्रदायेति सम्प्रदायः निर्माणपरम्परा स एव व्यवहार इत्यर्थः, व्यवहारः उपदेशादिकम्। स्वतन्त्रेति स्वातन्त्र्यम् अन्यव्यवहारानधीनव्यवहारकर्तृत्वं, तथाच सर्गादावितरबाधादीश्वरसिद्धिरिति भावः। प्रामाण्यं प्रमात्वं, कारणगुणजन्यमिति प्रमात्वघटितधर्मावच्छिन्नकार्य्यताप्रतियोगिकारणजन्यमित्यर्थः, तेन प्रत्यक्षप्रमायां विशेषणवद्विशेष्यसन्निकर्षरूपगुणस्य, अनुमित्यात्मकप्रमायां साध्यवत्पक्षविषयकसाध्यव्याप्यवैशिष्ट्यज्ञानरूपगुणस्य, उपमित्यात्मकप्रमायां प्रकृतनिष्ठसादृश्यज्ञानरूपगुणस्य, शाब्दप्रमायां वक्तृयथार्थज्ञानरूपगुणस्य हेतुतया कारणगुणत्वाननुगमेऽपि न क्षतिः तेषां प्रमात्वघटितधर्मावच्छिन्नकार्य्यताप्रतियोगित्वेनानुगमात्। न च पूर्वपूर्वाध्यापकयथार्थवाक्यार्थज्ञानजन्यतामादाय सिद्धसाधनमर्थान्तरं वेति वाच्यम्। सर्गाद्यकालीनवेदजन्यज्ञानस्यापि पक्षत्वात्। पौरुषेयः सजातीयोच्चारणानपेक्षमादिमत्पुरुषोच्चारणजन्यः, आयुर्वेदस्य संवादिप्रवृत्तिजनकयथार्थज्ञानजनकत्वेन तथाविधपौरुषेयत्वावधारणस्य उभयसिद्धतया दृष्टान्तत्वमिति भावः। अत्रापि वेदत्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वं, लिङ्गमपि वेदत्वं न तु वाक्यत्वं कारिकायां श्रुतेरित्युक्तत्वात् श्रुतिपदस्य धर्मपरतया श्रुतित्वलाभात् श्रुतित्वमेव वेदत्वमिति। वेदत्वञ्च अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वं, मन्वादिवाक्यवारणाय सत्यन्तदलम्। वाक्यानीति तथाच वाक्यत्वावच्छेदेन पौरुषेयत्वस्य साध्यतया वेदेऽपि तत्सिद्धिरिति भावः। संख्याविशेषा-

भारतवत्, वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्य-
वत्। सङ्ख्याविशेषात्, द्व्यणुकपरिमाणं सङ्ख्याजन्यं परिमाण-
प्रचयाजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणककपालद्वया-
रब्धघटपरिमाणात् प्रकृष्टतादृशकपालत्रयारब्धघटपरिमाणवत्,

---

दिति, संख्याविशेष: परमाणुगतद्वित्वं, संख्याजन्यमिति परिमाणजन्यपरिमाणे प्रचयजन्य-
परिमाणे च व्यभिचारवारणाय सत्यन्तम्। नित्यपरमाणुपरिमाणे व्यभिचारवारणाय-
जन्यत्वं, घटादौ व्यभिचारवारणाय परिमाणत्वमिति। तुल्यपरिमाणककपालद्वयेति अत्र
तुल्यत्वम् अविलक्षणत्वम्, अयं भाव: यत्र तुल्यपरिमाणानां पञ्चानां कपालानां द्वाभ्या-
मेको घट: त्रिभिरपरो घटोजात: तत्र कपालद्वयारब्धघटपरिमाणात् कपालत्रयारब्ध-
घटपरिमाणस्य वैलक्षण्यं प्रत्यक्षसिद्धम् उभयत्र कपालपरिमाणस्य हेतुत्वे तादृशवैलक्षण्यं
न निर्वहति परिमाणस्याविशेषात् इति कार्य्यवैलक्षण्यप्रयोजककारणवैलक्षण्यनिर्वाहाय
तादृशविलक्षणपरिमाणे त्रित्वसंख्याया एव हेतुत्वं न तु परिमाणस्य। न च एतादृश-
विलक्षणपरिमाण एव परिमाणस्य कारणत्वम् अन्यत्र संख्याया: कारणत्वम् इत्येव कथं
न भवतीति वाच्यम्। क्षुद्रपरिमाणकपालद्वयारब्धघटपरिमाणात् महत्परिमाणकपाल-
द्वयारब्धघटपरिमाणस्य वैलक्षण्यं प्रत्यक्षसिद्धं तादृशवैलक्षण्यस्य संख्याया: कारणत्वे
अनिर्वाहप्रसङ्गात् उभयत्र संख्याया एकरूपत्वात्। परिमाणस्य कारणत्वे तु उभयत्र
कारणीभूतकपालपरिमाणवैलक्षण्यात् कार्य्यीभूतघटपरिमाणस्य वैलक्षण्यं निर्वहति
इत्यावेदयितुमेव तुल्यपरिमाणककपालद्वयारब्धेत्युक्तम्। न च तुल्यपरिमाणकपालत्रया-
रब्धघटपरिमाण इव तादृशकपालद्वयारब्धघटपरिमाणेऽपि संख्याया: कारणत्वं कथं
न सम्भवति द्वित्व-त्रित्वयो: वैलक्षण्यात् कार्य्यवैलक्षण्यसम्भवात् इति वाच्यम्। तत्र
धीविशेषविषयत्वरूपाया: संख्याया: कारणत्वमपेक्ष्य परिमाणस्य कारणत्वे लाघवात्।
अत्र धीविशेषविषयत्वरूपत्रित्वस्य कारणत्वे गौरवं प्रामाणिकत्वात् न दोषाय। न च
त्रित्वसंख्याजन्यविलक्षणपरिमाणस्थले परिमाणरूपकारणसत्त्वात् परिमाणजपरिमाण-
मपि जायत इति वाच्यम्। विजातीयपरिमाणं प्रति विजातीयपरिमाणसामग्र्या:
प्रतिबन्धकत्वकल्पनात्। ननु द्व्यणुकपरिमाणस्य परमाणुपरिमाणजन्यतया हेतो: स्वरूपा-
सिद्धत्वम् इत्यत आह अणुपरिमाणेति, नित्यपरिमाणत्वादिति, अत्र परममहत्परि-
माणस्य दृष्टान्तत्वं, तन्निरासप्रयोजकमित्यत आह, अणुपरिमाणत्वादिति, अत्र व्यक्ति-

अणुपरिमाणञ्च न परिमाणजनकं नित्यपरिमाणत्वात् अणुपरिमाणत्वाद्वा, एवञ्च सर्गादौ द्व्यणुकपरिमाणहेतुपरमाणुनिष्ठद्वित्वसङ्ख्या च नास्मदाद्यपेक्षाबुद्धिजा, अतस्तदानीन्तनापेक्षाबुद्धिरीश्वरस्यैवेति ।

---

रेकैव दृष्टान्तः । न चेदमप्रयोजकमिति वाच्यम् । परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वनियमात् परमाणुपरिमाणसजातीयं द्व्यणुकपरिमाणं यदि परमाणुपरिमाणजन्यं स्यात् तदा परमाणुपरिमाणादुत्कृष्टं स्यादिति तर्कसत्त्वेन प्रयोजकत्वात् । ननु तथापि कथमीश्वरसिद्धिरित्यत आह, सर्गादाविति, तथाच सर्गाद्यकालीनपरमाणुगतद्वित्वसंख्या अपेक्षाबुद्धिजन्या द्वित्वादित्यनुमानेन इतरबाधबलादीश्वरीयापेक्षाबुद्धिसिद्धावीश्वरसिद्धिरिति परम्परया संख्याया ईश्वरसाधकत्वम् । अथ परमाणुगतद्वित्वादिसंख्या नित्यैवास्तु कथं तज्जनकतया ईश्वरीयापेक्षाबुद्धिसिद्धिरिति चेत् परमाणुगतद्वित्वादिसंख्याया नित्यत्वे नित्यानेकसमवेतत्वरूपजातिलक्षणापत्त्या गुणत्वव्याघातापत्तेः । न च परमाणुद्वित्वादीनां जातित्वमेवास्तु इति वाच्यम् । तद्द्वित्वाधिकरणैकपरमाणुमादाय तद्द्वित्वानधिकरणपरमाणुद्वयवृत्तिद्वित्वस्य तद्द्वित्वेन साङ्कर्यप्रसङ्गात् । न च परमाणुगतद्वित्वादिसंख्याया जन्यत्वेऽपि नापेक्षाबुद्धिजन्यत्वमिति वाच्यम् । घटादिगतद्वित्वादिसंख्याया अपेक्षाबुद्ध्यनन्तरमेव प्रत्यक्षोदयात् अपेक्षाबुद्धेर्द्वित्वादिप्रत्यक्षहेतुत्वमपेक्ष्य द्वित्वादिहेतुत्वकल्पनाया एव लघुत्वात् एवञ्च घटपटादिद्वित्वादिसंख्यासु अपेक्षाबुद्धेर्हेतुत्वे कल्पनीये सामान्यतो द्वित्वादौ अपेक्षाबुद्धेर्हेतुत्वोपगमात् । न चानन्तद्वित्वादिकल्पने गौरवमिति वाच्यम् । फलमुखगौरवस्यादोषत्वात् । न चैकस्यापेक्षाबुद्ध्या जनितद्वित्वस्य पुरुषान्तरीयापेक्षाबुद्धिरहितेनाग्रहणाद्द्वित्वादिप्रत्यक्षे अपेक्षाबुद्धिविशेषणतायां समवायघटितप्रत्यासत्त्या हेतुत्वावश्यकत्वात् तत एवापेक्षाबुद्धिविरहदशायां द्वित्वादिप्रत्यक्षविरहोपपत्तौ द्वित्वं प्रति तदधिकरणद्रव्ययोः समवायिकारणयोरसमवायिकारणयोश्च तदेकत्वयोर्नियामकत्वेनैवोपपत्तौ किमपेक्षाबुद्धिविशेषस्य निमित्तकारणत्वकल्पनेनेति वाच्यम् । अपेक्षाबुद्धेः द्वित्वप्रत्यक्षं प्रति समवायसम्बन्धेन हेतुत्वे द्वित्वाश्रयविषयतावच्छेदकविधया निवेशे गौरवात् समवायसम्बन्धेन तत्पुरुषीयप्रत्यक्षविषयद्वित्वं प्रति विशेष्यतासम्बन्धेन तत्पुरुषीयापेक्षाबुद्धेः हेतुत्वे लाघवात् तत्पुरुषीयप्रत्यक्षविषयत्वस्य कार्यतावच्छेदके निवेशात् नैकपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादेरपरपुरुषेण ग्रहणापत्तिः । अथ तथापि सामान्यसामग्रीसत्त्वादेकपुरुषीया-

विश्वविदव्यय इति विशिष्टस्याव्ययत्वं, तेन नित्यसर्वविषयकज्ञानसिद्धिः ॥ १ ॥

ननु शरीरविशिष्टस्य कर्तृतया विशेषणबाधात्मको विशिष्टबाध-

---

पेक्षाबुद्धिजन्यद्वित्वादेरपरपुरुषीय ग्राह्यत्वं दुर्वारमिति तत्पुरुषीयद्वित्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन तत्पुरुषीयप्रत्यक्षं प्रति विशेष्यतासम्बन्धेन तत्पुरुषीयापेक्षाबुद्धेर्हेतुत्वं वाच्यं तथाच कथमपेक्षाबुद्धेर्द्वित्वादिहेतुत्वमिति चेत् न, एतादृशकार्यकारणभावबलादपेक्षाबुद्धिविरहदशायां द्वित्वप्रकारकप्रत्यक्षवारणेऽपि तदानीं घट-पटयोर्द्वित्वमिति द्वित्वविशेष्यकप्रत्यक्षावारणात् परन्तु द्वित्वनिष्ठलौकिकविषयतासम्बन्धेन तत्पुरुषीयप्रत्यक्षं प्रति तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वस्य विषयविधया हेतुत्वावश्यकत्वात् द्वित्वप्रकारतामनिवेश्य द्वित्वनिष्ठलौकिकविषयतानिरूपितविषयतासम्बन्धेन तत्पुरुषीयप्रत्यक्षं प्रति तत्पुरुषीयापेक्षाबुद्धेर्मुख्यविशेष्यतासम्बन्धेन हेतुत्वोपगमेऽपि अपेक्षाबुद्धिविरहदशायाम् इदं द्वित्वमिति प्रत्यक्षस्य द्वित्वनिर्विकल्पकस्य चावारणात्। न चापेक्षाबुद्धिविरहदशायां द्वित्वादिप्रत्यक्षे का क्षतिरिति वाच्यम्। अनुभवविरोधात्। न च ईश्वरीयापेक्षाबुद्धेः परमाणुगतद्वित्वोत्पादकत्वे परमाणुषु नियतं द्वित्वोत्पत्तिरिति वाच्यम्। सर्गाद्यकालस्य निमित्तान्तरत्वकल्पनेन तद्वारणसम्भवात्। न च ईश्वरीयापेक्षाबुद्धेर्नित्यत्वेन परमाणुगतद्वित्वनाशासम्भव इति वाच्यम्। शब्दादेरिव परमाणुगतद्वित्वादीनां योग्यवर्त्तिसमानाधिकरणगुणान्तरस्य नाशकत्वकल्पनात्। एक-द्व्यादिपदशक्यतावच्छेदिका एकत्व द्वित्वादिसंख्या गुणविशेषरूपेति द्रव्य एव एकद्व्यादिप्रयोगो मुख्यः गुणादिषु च तत्प्रयोगो गौणः गुणाद्यैकत्वम् इदमित्याकारकबुद्धिविशेष्यत्वरूपं तत्र द्वित्वादिकञ्च अपेक्षाबुद्धिविशेषरूपं समवेतकार्यं प्रति तादात्म्येन द्रव्यस्यैव हेतुत्वात् गुणादिषु न संख्यासम्भव इति। विशिष्टस्याव्ययत्वमिति विशिष्टस्य विश्वविषयकज्ञानवतः अव्ययत्वं नित्यत्वं साध्यमिति शेषः। तेनेति तथाच विशिष्टान्वयस्थले भवति बाधके विधेयस्य विशेषणविशेष्योभयान्वितत्वं नियत इति भावः। ईश्वरीयज्ञानस्य ध्वंस-प्रागभावादिकल्पनायां गौरवात् लाघवज्ञानसहकारेण उपादानगोचरापरोक्षज्ञानजन्यत्वसिद्धौ नित्यताहशज्ञानजन्यत्वसिद्धिः एवं तज्ज्ञानस्य कारणानियम्यतया विनिगमनाविरहेण सर्वविषयकत्वसिद्धिरिति भावः ॥ १ ॥

कार्यत्वहेतौ बाधदोषमाह, शरीरविशिष्टस्येति शरीरविशिष्टस्यैव कर्तृत्वनियमः,

इति (१), कर्त्तृजन्यत्वव्यापकशरीरजन्यत्वाभावात् कर्त्तृजन्यत्वाभाव इति सत्प्रतिपक्षता च (२)। यद्वा कर्त्ता शरीर्य्येव इति व्याप्तिविरोधिनी यद्वा व्याप्त्या यथादर्शनप्रवृत्तया शरीरी कर्त्ता उपनेयः, पक्षधर्मतया च क्षित्यादावशरीरीति साध्याप्रसिद्धिः विशेषविरोधश्च (४), यद्वा शरीरजन्यत्वाद्युपाधिना व्याप्यत्वासिद्धिः (५), इति कार्य्यत्वहेतौ पञ्च दोषास्तत्राह।

---

विशेषणबाधात्मकः कर्त्तृत्वरूपविशेषणबाधात्मकः, विशिष्टबाधः सकर्त्तृकत्वबाधः। यद्यपि बाधस्तृतीयस्तवके निरस्तः तथापि तत्र योग्यानुपलब्धिबाधो निरस्तः अत्र तु अनुमानबाधो निरसनीयः, अनुमानञ्च ईश्वरो न कर्त्ता शरीराभावादित्येवंरूपम्, एतादृशानुमानस्याभाधर्मिणीकृतं शरीरविशिष्टस्य कर्त्तृत्वस्येति। तथाचैतादृशानुमानेन क्षितिः सकर्त्तृका कार्य्यत्वादित्यनुमानबाधः। अतत एव ईश्वरस्य भानमित्यभिमानेनेदम्। बाधेनानुमानबाधमुक्त्वा सत्प्रतिपक्षेण तमाह, कर्त्तृजन्यत्वव्यापकेति, तथाच क्षितिरकर्त्तृका शरीराजन्यत्वादिति विपरीतकोटिसाधकानुमानेन सत्प्रतिपक्ष इति भावः। प्रकारान्तरेणानुमानबाधमाह यद्वेति, कर्त्ता शरीर्य्येवेति कर्त्ता शरीर्य्येवेतिवाक्यप्रतिपाद्यव्याप्तिविरोधिनीत्यर्थः, विशेषणसङ्गतैवकारस्य विशेष्यतावच्छेदके विशेषणव्याप्यत्वरूपार्थकत्वात्, तथाच क्षितिः सकर्त्तृका कार्य्यत्वादित्यनुमानेन पक्षधर्मतावलादशरीरिकर्त्तृजन्यत्वसिद्धिः कार्य्या तत्र च शरीरित्वव्याप्यकर्त्तृत्वग्रहः प्रतिबन्धकः तद्व्याप्यतया गृहीतधर्मधर्मितावच्छेदकतदभावप्रकारकानाहार्य्यज्ञानानुपगमादिति निष्कर्षस्त्विति भावः। साध्याप्रसिद्धिमाह, यद्वेति, यथादर्शनप्रवृत्तयेति योयः कर्त्ता स शरीरी यथा घटादिकर्त्ता कुलालादिरिति सहचारदर्शनगृहीतया, व्याप्त्या शरीरित्वनिष्ठकर्त्तृत्वव्याप्त्या, शरीरी कर्त्ता उपनेयः कर्त्तृमात्रे शरीरित्वमनुमेयमित्यर्थः, पक्षधर्मतया इतरबाधसहकारेण, क्षित्यादौ सर्गाद्यकालीनक्षित्यङ्कुरादौ, अशरीरीतीति कर्त्ता उपनेयः इति पूर्वेणान्वयः, कर्त्तरि अशरीरित्वम् अनुमेयमित्यर्थः, साध्याप्रसिद्धिरिति ईश्वरस्य कर्त्तृत्वे शरीरित्वव्याप्यकर्त्तृत्वेन शरीरित्वस्य पक्षधर्मताबलेनाशरीरित्वस्य च प्रसक्त्या शरीरित्वाशरीरित्वोभयाविशिष्टकर्त्तृत्वरूपसाध्याप्रसिद्धिरित्यर्थः, अत्र हेतुमाह विशेषविरोधश्चेति शरीरित्वरूपविशेषस्य व्याप्त्यनिर्वाहेन उपस्थितस्य कर्त्तरि शरीरित्वरूपविशेषस्य वा इति, यतः कर्त्तृत्वनिष्ठशरीरित्वव्याप्तिबलेन

**न बाधोऽस्योपजीव्यत्वात्, प्रतिबन्धो न दुर्बलैः।**
**सिद्ध्यसिद्ध्योर्विरोधो न, नासिद्धिरनिबन्धना॥ २॥**

ईश्वरे धर्मिणि शरीरबाधात् कर्त्तृत्वबाधो (१) न, अधिकरणज्ञानं विना अभावज्ञानासम्भवात् अस्य कार्य्यत्वस्य धर्मिसाधकस्याधिकरणज्ञानजनकतया अवश्यापेक्षणीयत्वेन बलवत्त्वात्, एवञ्च न विशेषणबाधात्मकोविशिष्टबाधः प्रत्यक्षात्मक इति, ईश्वरो न कर्त्ता

---

पक्षधर्मतावच्छेदकीभूतस्य कर्त्तृरि अशरीरित्वरूपविशेषस्य च तयोः विरोधः ईश्वरेक-धर्मिवृत्तित्वाभावलक्षणोविरोधः। एतदेवोक्तं रामभद्रेण "ईश्वरो न कर्त्ता अशरीरित्वादिति बाधोऽत्र दोषः क्षितिरकर्त्तृका शरीराजन्यत्वादिति सत्प्रतिपक्षो वा कर्त्ता शरीरीति व्याप्तिविरोधिनी वा शरीरित्वाशरीरित्वयोर्विरोधो वा शरीरजन्यत्वमुपाधिर्वा" इति। विशेषण-विशेष्यविरोधश्चेत्ययं पाठः प्रकाशकाराद्यसम्मतत्वान्न समीचीनः। प्रकाशकारेणाप्युक्तं "व्याप्तिपक्षधर्मतोपस्थाप्यविशेषयोर्विरोधेन विशेषविरोधः स्यात्" इति। व्याप्यत्वासिद्धिमाह, शरीरजन्यत्वाद्युपाधिनेति, यत्र यत्र सकर्त्तृकत्वम् उभयवादिसिद्धं तत्र तत्र शरीरजन्यत्वम् इति शरीरजन्यत्वस्य साध्यव्यापकत्वं, यत्र यत्र कार्य्यत्वम् उभयवादिसिद्धं तेषामन्तर्गतं यत् चित्यङ्कुरादिकं तत्र शरीरजन्यत्वाभावेन साधनाव्यापकत्वमिति शरीरजन्यत्वस्य उपाधित्वम्। कार्य्यहेताविति कार्य्यत्वहेतावित्यर्थः। दोषा इति यथाकथञ्चित् क्षित्यङ्कुरादिधर्मिकानुमाननिरोधकदोषाः न तु हेत्वाभासलक्षणाक्रान्तदोषा इति। दोषानुद्धरति, मूले न बाधोऽस्योपजीव्यत्वादिति, बलवत्त्वात् ईश्वरसिद्धिजनकत्वात्, इदञ्च कारिकास्योपजीव्यपदार्थविवरणम्। न चाधिकरणज्ञानं विनापि बाधो रूपं नास्तीतिप्रत्यक्षवत् ईश्वरे कर्त्तृत्वं नास्तीतिप्रत्यक्षं कथं न सम्भवतीति वाच्यम्। बहिरिन्द्रियस्य स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वनियमेन तादृशप्रतीतौ बाधो विशेषणत्वस्य रूपाभावे विशेष्यत्वस्य च वक्तव्यत्वात्। न चात्रापि तथा सम्भवति, विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वेन प्रमाणान्तरेणापि विशेषणज्ञानस्यापेक्षणीयतया ईश्वररूपविशेषणज्ञानार्थं यत् प्रमाणान्तरमपेक्षणीयं तेन ईश्वरस्य कर्त्तृत्वसिद्धा ईश्वरे कर्त्तृत्वं नास्तीतिप्रत्यक्षस्य बाधितत्वात्। अनुमानबाधोऽपीत्यादि अनुमानेऽपि परा-

अशरीरत्वात् इत्यनुमानबाधोऽपि नेत्यर्थः । क्षित्यादि न सकर्तृकं शरीराजन्यत्वात् इति (२) न प्रतिबन्धकं, सत्प्रतिपक्षहेतोः शरीरांश-वैयर्थ्यात् व्याप्यत्वासिद्ध्या दुर्बलत्वात् । तृतीयेऽपि कार्यत्वव्याप्तेः पक्षधर्मत्वसहकारात् विपक्षबाधकतर्कावताराच्च बलवत्त्वम्, उपन्य-स्तायाः कर्त्ता शरीरी एवेति व्याप्तेर्दुर्बलतया न प्रतिबन्धः । चतुर्थे च यदि पक्षधर्मतया अशरीरी उपस्थितस्तदा न विरोधः, कर्तृत्वस्या-

---

मर्थम् अधिकरणज्ञानस्यापेक्षणीयत्वेन उक्तानुमानस्याप्रसिद्धत्वेन न बाधकत्वमिति तात्पर्यम् । शरीरांशवैयर्थ्यादिति अजन्यत्वस्य अकर्तृकत्वव्याप्यत्वेन सम्भवात् शरीरांशस्य निष्फलत्वादित्यर्थः, व्याप्यत्वासिद्ध्या नीलधूमादाविव व्यर्थविशेषणघटितत्वेन व्याप्त्यनङ्गीकारेणेत्यर्थः, दुर्बलत्वात् प्रकृतसाध्याभावासाधकत्वादित्यर्थः । न च शरीराजन्यत्वहेतुना सत्प्रतिपक्षासम्भवेऽपि अजन्यत्वहेतुनैव तस्य सम्भव इति वाच्यम् । यत् सावयवं तत्जन्यमित्यनुमानेन द्व्यणुकादौ जन्यत्वसिद्ध्या अजन्यत्वस्य स्वरूपासिद्धत्वेन असाधकत्वात् । न च शरीराजन्यत्वादित्यत्र शरीरजन्यत्वाभावघटकतया शरीरांशस्य सार्थक्यमिति वाच्यम् । तस्य सार्थक्यसम्भवेऽपि अप्रयोजकत्वेन दुर्बलत्वात् । प्रतिबन्धो न दुर्बलैरिति कारिकांशं विवृणोति तृतीयेऽपीति, कार्यत्वव्याप्तेः कार्यत्वनिष्ठसकर्तृकत्व-व्याप्तेः, बलवत्त्वमित्यग्रेतनेनान्वयः, बलवत्त्वं प्रकृतसाध्यसाधकत्वं, पक्षधर्मतासहकारात् इतरबाधसहकारात्, विपक्षबाधकतर्कावतारात् विपक्षस्य साध्याभाववद्वृत्तित्वस्य बाधको-ऽनर्थः कार्यत्वं यदि सकर्तृकत्वव्यभिचारि स्यात् कर्तृजन्यतावच्छेदकं न स्यादित्येवं-रूपः तदवतारात् तेन व्यभिचारसंशयनिवर्तनादित्यर्थः, दुर्बलतया विपक्षबाधकतर्का-भावेन सन्दिग्धतया, न प्रतिबन्धः न प्रकृतसाध्यस्य प्रतिबन्धकत्वम् । सिद्धसिद्धौ-रित्यंशं विवृणोति चतुर्थे चेति, पक्षधर्मतया इतरबाधसहकारेण अशरीरी उपस्थितः अशरीरी कर्त्ता उपस्थितः, कर्तृत्वस्येति कर्तृत्वस्याशरीरित्वसामानाधिकरण्योपलब्धौ क्वचिदपि कर्त्तरि अशरीरित्वसिद्ध्या कर्तृत्वं शरीरित्वव्याप्यत्वव्याघातेन तादृशव्याप्ति-भङ्गेन कर्तृमात्रे शरीरित्वमुपनेयमित्यसिद्धमिति भावः । तदनुपस्थापन इति अशरीरि-कर्त्रनुपस्थितावित्यर्थः, विरोधाश्रयत्वेति ईश्वरात्मकैकधर्मिणि शरीरित्वाभावस्य पक्षविरोधघटके-श्वरपक्षधर्मैव इत्यर्थः । तथाच ईश्वरपक्षधर्म्यप्रसिद्ध्या तादृशविरोधो दुर्वह इति भावः ।

शरीरित्वसमानाधिकरणस्योपलम्भात्, तदनुपस्थाने तु न विरोधः, विरोधाश्रयस्यासिद्धेः । पञ्चमे च विपक्षबाधकतर्कसत्त्वात् तदभावनिबन्धना अज्ञानरूपाऽसिद्धिर्व्याप्यत्वासिद्धिर्वा न, शरीरजन्यत्वोपाधेरपि विपक्षबाधकाभावेनापास्तत्वात् ॥ २ ॥

ननु यदीश्वरः कर्त्ता स्यात् शरीरी स्यादिति प्रतिकूलतर्कावतारोऽनुकूलतर्काभावश्च तत्राह ।

**तर्काभासतयाऽन्येषां, तर्काशुद्धिरदूषणम् ।**
**अनुकुलस्तु तर्कोऽत्र कार्य्यलोपोविभूषणम् ॥३॥**

प्रतिकूलतर्कास्तावदीश्वरासिद्धा आश्रयासिद्धा इत्याभासाः ।

---

अतएवोक्तं रामभद्रेण "शरीरित्वाशरीरित्वयोः द्वयोः व्याप्ति-पक्षधर्मतयोपनेययोरीश्वरपक्षकैकधर्मिण्युपस्थिताभावलक्षणो यो विरोधः स न ईश्वररूपधर्मिण एवाप्रसिद्धेरिति भावः" इति । कारिकायां नासिद्धिरनिबन्धनेति, अनिबन्धना निर्बीजा, एतत्कारिका विवृणोति, पञ्चमे चेति, बीजाभावं दर्शयति, विपक्षबाधकेति, अनुकूलतर्कविरहे एवासिद्धिबीजम् अतोऽत्र अनुकूलतर्कसत्त्वात् असिद्धेर्निर्बीजत्वमिति भावः । तर्काभावस्य बीजत्वं दर्शयति, तदभावनिबन्धनेति तर्काभावाधीनेत्यर्थः, अज्ञानरूपा व्याप्तेरज्ञानरूपेत्यर्थः, उपाधेर्व्याप्तिज्ञानविरोधित्वमिति मतेनेदम्, उपाधेर्व्याप्तिविरहोन्नायकत्वमतेनाह, व्याप्यत्वासिद्धिर्वेति, तदनुपलक्षणं शरीरजन्यत्वस्य कर्तृजन्यत्वव्यापकत्वस्यैवासिद्ध्या उपाधित्वासम्भव इति दर्शयति, शरीरजन्यत्वोपाधेरपीति उपाधित्वेनोपन्यस्तशरीरजन्यत्वादेरित्यर्थः, विपक्षबाधकाभावेन यद्यत् सकर्तृकं तत् शरीरजन्यमित्यत्र व्यभिचारसंशयनिरासकानुकूलतर्काभावेन अपास्तत्वात् उपाधित्वाभावात् । तथाच यद्यत् सकर्तृकं तत्शरीरजन्यमिति नियमेनैव शरीरजन्यत्वे सकर्तृकत्वव्यापकत्वं ग्राह्यं, तादृशनियमस्य अनुकूलतर्काभावेन सन्दिग्धानैकान्तिकतया तद्ग्राहकव्याप्तिज्ञानस्याप्रामाण्यमिति भावः ॥ २ ॥

कारिकायाम् अन्येषामिति अन्येषां प्रतिकूलतर्काणां, बहुवचनस्वरसात् ईश्वरो यदि कर्ता स्यात् प्रयोजनवान् स्यात् अथ वा दुःखी स्यादित्यादितर्कपरिग्रहः । तर्काशुद्धिदूषणमिति तर्कात् प्रतिकूलतर्कात् अशुद्धिः ईश्वरानुमानासिद्धिः, अदूषणं न दोष,

कर्त्तारं विना कार्य्यं न स्यादिति तर्कस्तु विभूषणं उपकारकः। "अहं सर्वस्य प्रभवोमत्तः सर्वं प्रवर्त्तते" इत्यागमश्च (गीता०)। आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः"॥ (मनु० अ० १२) इति तर्कानुगृहीतस्यागमस्य बलवत्त्वम्॥ ३॥

ननु कार्य्यत्वं प्रयत्नजन्यत्वेऽप्रयोजकम् अत्राह।

**स्वातन्त्र्ये जडताहानिः, नादृष्टं दृष्टघातकम्।**
**हेत्वभावे फलाभावः, विशेषस्तु विशेषवान्॥ ४॥**

न हि कर्त्तारं हेतुं विना कार्य्यं। परमाणोरेव यत्नवत्त्वेऽचेतन्यानुपपत्तिः, अचेतनस्य चेतनप्रेरितस्यैव जनकत्वात्। अदृष्टमपि दृष्टकारणसहकारेणैव फलजनकम्। न च चेष्टायामेव भोक्तृ-

---

अशब्दस्य निषेधार्थकत्वात्। टीकायाम् आश्रयासिद्धा इति आश्रयासिद्धाः पक्षदाश्रयविषयकाः, आभासाः कर्तृत्वाभावरूपविषयापरिशोधकाः, अभावांशस्य तदनुयोगित्वाभावादिति। इत्यागमश्चेति उपकारक इति पूर्वेणान्वयः। ननीश्वरस्य कर्तृत्वाभावसाधकागमस्यापि सत्त्वात् कथमस्यागमस्य प्रामाण्यमित्यत आह, आर्षमिति, आर्षं वेदं धर्मोपदेशं स्मृत्यादिकम्। तर्कानुगृहीतस्येति तर्कसहकृतस्येत्यर्थः, तथाच तर्कसहकृतागमसत्त्वे तर्कविरहितागमस्य दुर्बलत्वमिति भावः॥ ३॥

आयोजनं कर्म तच्च प्रयत्नजन्यं कर्मत्वादिति द्व्यणुकादिप्रयोजककर्महेतुभूतप्रयत्नाश्रयत्वेनेश्वरसिद्धिरिति यत् पूर्वमुक्तं तत्र कर्मत्वे अप्रयोजकत्वमाशङ्कते, नन्वित्यादिना, कार्य्यत्वमिति कर्मत्वमित्यर्थः, सर्गाद्यकालीनपरमाणुक्रियाहेतुभूतः प्रयत्नः परमाणोरेवास्तु अथ वा प्रयत्नं विना अदृष्टादेव तत्कर्मास्तु किं वा चेष्टारूपक्रियानियामको भोक्तृप्रयत्नविशेष एवास्तु न तु क्रियामात्रम् इत्यप्रयोजकत्वहेतुभूतदोषत्रयं क्रमेण निरस्यति कारिकायां स्वातन्त्र्य इति स्वातन्त्र्ये परमाणोः प्रयत्नवत्त्वे जडताहानिः अचेतनत्वव्याघातः, एतेन प्रथमदोषनिरासः। अदृष्टं न दृष्टघातकं न प्रयत्नादिदृष्टकारणपरित्यागेन कार्यजनकम्, अदृष्टादेव सर्वत्र कार्योत्पादे दृष्टकारणवैयर्थ्यापत्तेः। एतेन द्वितीयदोष-

प्रयत्नो हेतुः, न तु क्रियासामान्ये इति, चेष्टायां विशेषप्रयत्नस्य हेतुत्वेऽपि क्रियासामान्ये प्रयत्नसामान्यस्य कारणत्वानपायात्, अन्यथा बीजविशेषस्याङ्कुरविशेषे जनकत्वेनाङ्कुरसामान्यं प्रति बीजत्वेन हेतुताया अपि विलोपापत्तेः॥ ४॥

ननु धृत्यादीनां प्रयत्नजन्यत्वे किं मानमित्यत आह।

**कार्य्यत्वान्निरुपाधित्वमेवं धृति-विनाशयोः।**
**विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत्॥ ५॥**

धृति-विनाशयोः प्रयत्नजन्यत्वान्निरुपाधित्वं। विच्छेदेनान्तरा

---

निरासः। ननु विशेषतामव हेत्वन्तरमित्यत आह, हेत्वभाव इति, अन्वय-व्यतिरेकाभ्यां घटादौ दण्डादेरिव कार्यमात्रे क्षतेरपि हेतुत्वग्रहात् तदभावे अङ्कुरादिकार्योत्पत्तिर्न भवतीत्यर्थः। विशेषस्येति चेष्टात्मकक्रियाविशेषः भोक्तृप्रयत्नजन्यत्वरूपविशेषधर्मवान्, तथाच यद्विशेषयोरिति न्यायात् सामान्यतः क्रियात्वावच्छिन्नं सामान्यतः प्रयत्नत्वेन हेतुत्वसिद्धिरिति भावः। अन्यथा तत्तत्कारणस्य तत्तत्कार्यहेतुत्वे सामान्यतो दण्डत्वादिना घटादिकं प्रति हेतुत्वविलयापत्तेः। टीकायां कर्तारमिति क्षितिविशिष्टमित्यर्थः, तेन क्षतेरपि हेतुत्वलाभः, कार्यमिति, तथाच कार्यत्वावच्छिन्नं प्रति क्षतेर्हेतुतया तन्मूलकतर्कसत्त्वेन न कर्मत्वं प्रयत्नजन्यत्वे अप्रयोजकमिति भावः। अदृष्टसहकारिवैकल्यवशादेव हेत्वभावे फलाभाव इत्यर्थोऽपि बोध्यः, तथाच प्रयत्नाभावे अदृष्टाभावस्य न फलजनकत्वमिति भावः॥ ४॥

ब्रह्माण्डं प्रयत्नप्रतिबद्धपतनकं धृतिमत्त्वात् ब्रह्माण्डनाशः प्रयत्नजन्यः नाशत्वादित्यादौ अनुकूलतर्कं दर्शयितुं शङ्कते नन्वित्यादिना, किं मानमिति तथाच धृतिविशेषस्य विनाशविशेषस्य च प्रयत्नविशेषजन्यत्वेऽपि तत्सामान्ये तत्सामान्यजन्यत्वे मानाभाव इति भावः। कारिकायां कार्यत्वादित्यादि, एवं पूर्वोक्तरीत्या क्रियासामान्य-प्रयत्नसामान्ययोः कार्य-कारणभाववदिति यावत्, धृति-विनाशयोः धृतिसामान्य-विनाशसामान्ययोः प्रयत्नसामान्यजन्यत्वात् निरुपाधित्वम् अव्यभिचरितत्वं, तथाचाच कार्य-कारणभावरूपानुकूलतर्कस्य व्यभिचारशङ्कानिवर्तकत्वमिति भावः। पदस्यापीति कार्यत्वान्निरुपाधित्वमिति पूर्वेणान्वयः, पदस्य व्यवहारस्य कार्यत्वात् स्वतन्त्रपुरुषप्रयोज्यत्वात् निरुपा-

प्रलयेन आदर्शाद्यभावात् अर्वाग्दर्शी नाद्यव्यवहारमूलं व्यवहारानभिज्ञत्वादिति सर्गाद्यकालीनघटादिव्यवहारप्रवर्त्तकः पुरुषः सिद्ध्यति। एवं प्रत्ययादेर्वेदजन्यधीप्रामाण्यादेरपि निरुपाधित्वम्। अथ वा कार्य्येत्यादिकमन्यथा व्याख्यायते। कार्य्यं तात्पर्य्यं, तात्पर्य्यविषय एव शब्दप्रामाण्यमिति तात्पर्य्यं हि यस्य वेदे स एवेश्वरः। आयोजनं व्याख्यानं, वेदास्तदर्थविद्व्याख्याताः महाजनपरिगृहीतवाक्यत्वात्, अव्याख्यातत्वे पदार्थानवगमेऽननुष्ठानापत्तेः,

---

धित्वम् अव्यभिचरितत्वमित्यर्थः। नन्वयमनादिघटादिव्यवहारः पूर्वपूर्वकुलालादिप्रयुक्त एव भविष्यति किमीश्वरेणेत्यत आह, विच्छेदेनेति प्रलये विच्छेदादयं व्यवहारो न अनादिस्तथाच सर्गादौ तद्व्यवहारप्रवर्त्तकः कश्चिदपेक्षित इति भावः। प्रत्ययादेरिव वेदजन्यशाब्दधीप्रामाण्यादेरिव निरुपाधित्वं पूर्ववत् कार्य्य-कारणभावरूपानुकूलतर्कादेव शाब्दप्रमायां वक्तृयथार्थज्ञानरूपगुणजन्यत्वव्यवस्थापनादिति भावः। प्रत्ययादेरित्यादिपदेन श्रुति-संख्याविशेषपरिग्रहः। टीकायाम् आदर्शाद्यभावात् व्यवहारदर्शकाभावादित्यर्थः, अर्वाग्दर्शी पूर्वव्यवहारदर्शी, नाद्यव्यवहारमूलं नाद्यव्यवहारप्रवर्त्तक इत्यर्थः; स्वतःसिद्धज्ञानाभावादिति भावः।

वेदप्रामाण्याभ्युपगन्तृमीमांसकं प्रति परमेश्वरस्वीकाराय कार्य्यायोजनेत्यादिकारिकामन्यथा व्याख्यातुं प्रतिजानीते अथ वेति, कार्य्यमिति कार्य्यत्वम् उद्देश्यत्वम् उद्देशोऽभिप्रायः स एव तात्पर्य्यमिति कार्य्यपदस्य तात्पर्य्यवाचित्वं, तात्पर्य्यमिति तदेव परम् उद्देश्यं यस्येति व्युत्पत्त्या यदुद्देशेन यः शब्दः प्रयुज्यते स तत्परः तस्य भावः तात्पर्य्यं तच्च इच्छाविशेषः। अतएव प्रशंसावाक्यं प्रवृत्तिमुद्दिश्य प्रयुज्यते इति तत् प्रवृत्तिपरं निन्दावाक्यं निवृत्तिमुद्दिश्य प्रयुज्यते तन्निवृत्तिपरमुच्यते। तात्पर्य्यविषय एवेति एतद्वाक्यम् एतदर्थविशेष्यकैतदर्थप्रकारकबोधो भवत्विति वक्तृतात्पर्य्यविषयवाक्यार्थ एवेत्यर्थः, शब्दप्रामाण्यं शब्दनिष्ठप्रामाण्यं, तच्च तात्पर्य्यविषयवाक्यार्थयथार्थशाब्दबोधजनकत्वं, निस्तात्पर्य्यकशुक-निर्घोषवचनानां प्रामाण्यव्यवहाराभावात्। एकार्थतात्पर्य्येण मूलवक्त्रा यदुच्चरितमनुवक्त्रा अन्यार्थतात्पर्य्येण तदुच्चारणेन श्रोतुरन्यार्थबोधजननेऽपि तद्वाक्यस्यान्यार्थे प्रामाण्यव्यवहारात् तात्पर्य्यपदं मूलवक्तृतात्पर्य्यपरम्. एवञ्च वेदः यथार्थतात्पर्य्यकः प्रमाणशब्दत्वादित्यनु-

एकदेशदर्शिनश्च व्याख्यायां नाश्वासः। एवं धृतिर्धारणं, धृत्यादेरित्यादिग्रहणात् अनुष्ठानसंग्रहः। एवमीश्वरादिपदार्थतया ईश्वरसिद्धिः। तदुक्तम् "उद्देश एव तात्पर्यं व्याख्या विश्वदृशः सतो। ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः"॥ उद्देश इच्छाविशेषः। एवम् "अहं सर्वस्य प्रभवः" इत्यादावहंपदं स्वतन्त्रोच्चारयितृपरं, लोकस्थले सतात्पर्यकशब्दस्यैव प्रमाणत्वात् "य एव लौकिकास्त-

---

मानेन वेदे तात्पर्यसिद्धावध्यापकतात्पर्यमादाय न सिद्धसाधनं भ्रमादिशून्यस्वतन्त्रपुरुषतात्पर्यस्यैव प्रामाण्यप्रयोजकत्वेन साध्यत्वात्। स एवेश्वर इति तदन्यस्य सकलवेदार्थदर्शित्वाभावादिति भावः। न च वेदे स्वतन्त्रवक्तृपरमेश्वरतात्पर्यसाधने साध्याप्रसिद्धिरिति वाच्यम्। यथार्थं यदर्थे प्रमाणव्यवहारविषयः तद्वाक्यं स्वतन्त्रपुरुषीयतात्पर्यविषयतदर्थबोधजनकमिति सामान्यव्याप्त्या वेदे तत्तदर्थविषयकप्रमाणव्यवहारविषयत्वज्ञानात् कथञ्चिद्विशेषसिद्धेः। न चैतादृशतात्पर्यरूपसाध्यघटकतयेश्वरसिद्धावपि तात्पर्यस्य ईश्वरासाधकत्वात् तात्पर्यबोधकवाक्यपदोत्तरपञ्चमीविभक्त्यसङ्गतिरिति वाच्यम्। नित्यसाध्यघटकतया कस्यचित्पुरुषस्य सामान्यतः सिद्धावनन्तरं तस्य नित्यसर्वविषयकज्ञानवत्त्वरूपेश्वरत्वेन विशेषतः अत इति तात्पर्यस्य परमेश्वरसाधकत्वात्। अतएवोक्तं तात्पर्यं हि यस्य वेदे स एवेश्वर इति, एवमुत्तरत्रापि बोध्यम्। आयोजनमिति आ सम्यग्भावेन योजनम् इति व्युत्पत्त्या आयोजनपदस्य व्याख्यापरत्वम्। तदर्थविद्व्याख्याताः सकलवेदार्थदर्शिविज्ञापितार्थकाः, महाजनपरिगृहीतवाक्यत्वात् महाजनानुष्ठीयमानविषयबोधकवाक्यत्वादित्यर्थः। एकदेशदर्शिन इति वेदैकदेशदर्शिनः असर्वज्ञस्येत्यर्थः, नाश्वासः न विश्वासः। धारणं वेदधारणं वेदाध्ययनमिति यावत्, तथाच "स्वाध्यायोऽध्येतव्यः" इति श्रुतिमूलकं वेदाध्ययनं स्वतन्त्रप्रमाणपुरुषमूलकं शिष्टैरनुष्ठीयमानत्वात् इत्यनुमानेन साध्यघटकतया ईश्वरसिद्धिरिति भावः। धृत्यादेरित्यादिपदग्रहणात् अनुष्ठानसंग्रह इति, अनुष्ठानम् उपासनं, तथाचायं प्रयोगः उपासनं सविषयकं शिष्टैरनुष्ठीयमानत्वात् इति। केचित्तु धारणं ज्ञानविशेषः, तथाच वेदाः एतद्विषयकानित्यज्ञानान्यज्ञानपूर्वकाः वाक्यत्वात् मा मे भवत्वित्यादिवाक्यवत्। एवं यागादिः यागविषयकानित्यज्ञानान्यज्ञानवदनुष्ठितः अनुष्ठितत्वात् पाकादिवदिति प्रयोगाविति वदन्ति। ईश्वरादि-

एव ;वैदिकाः" इति लौकिकाद्यमादिपदवदलौकिकेऽपीयमेव व्यवस्था। प्रत्ययतः विधिप्रत्ययात्, आप्ताभिप्रायोविध्यर्थः, यस्याभिप्रायः स एवेश्वरः ॥ ५ ॥

**प्रवृत्तिः कृतिरेवात्र सा चेच्छातः, यतश्च सा।**
**तत् ज्ञानं, विषयस्तस्य विधिः, तज्ज्ञापकोऽथ वा ॥६॥**

विधिजन्यज्ञानात् प्रवृत्तिर्दृश्यते, सा च इच्छातश्चिकीर्षातः, चिकीर्षा च कृतिसाध्यत्वेष्टसाधनताज्ञानात्, तज्ज्ञानस्य विषयः कार्यत्वम् इष्टसाधनत्वञ्च विधिरिति प्राचीनमतम्। स्वमतमाह

---

पदार्थतयेति, तथाचायं प्रयोगः ईश्वरपदं जगदुत्पादकपरं तत्त्वेन वेदबोधितत्वादिति, तथाच श्रुतिः "यतो वा इमानि भूतानि जायन्ते" इत्यादि। तदुक्तमिति, मूलकारेणेति शेषः, तदुक्तमित्यनेन प्रमाणोपन्यासे चान्यप्रमाणं प्रतीयत इति तदुक्तमित्यनेन स्वीयप्रमाणोपन्यासस्य सन्दर्भविरुद्धत्वं प्रतिभाति। इच्छाविशेष इति, तथाच विध-इमः सर्वज्ञस्य इच्छाविशेष एव वेदे तात्पर्यं न त्वपरस्य, एवं सर्वज्ञस्य वेदव्याख्येन सतो निश्चितप्रामाण्या निर्दोषेति यावत् इति पूर्वार्द्धस्य तात्पर्यम्। लोकवत्तानुवाद्य-इत्यस्यार्थमाह, एवमित्यादि, स्वतन्त्रोच्चारयितृपरमिति, तथाचायं प्रयोगः अलौकिकार्थ-पदं स्वतन्त्रोच्चारयितृपरम् पदत्वात् लौकिकाद्यपदवदिति। त एव तादृशा एव, त एव तादृशा एव। इयमेव व्यवस्था लौकिकशब्दप्रामाण्यवद्वैदिकशब्दप्रामाण्य-व्यवस्थेत्यर्थः। यस्याभिप्राय इति वैदिकलिङाद्यर्थ इति शेषः, यथोक्तम् स्वर्गकामो-ऽश्वमेधेन यजेतेत्यादिश्रुतिघटकलिङ्प्रत्ययः आप्ताभिप्रायवाचकः लिङ्प्रत्ययत्वात् लौकिकलिङ्प्रत्ययवदित्येवंरूपः ॥ ५ ॥

आद्या प्रवृत्तिरिच्छैव इति प्रयोगात् यद्यपीच्छा अन्यत्र प्रवृत्तिशब्दार्थः तथापि विधि-प्रस्तावे कृतिरेव प्रवृत्तिशब्दार्थः इच्छामात्रेण विध्यर्थनिर्वाहे बहुवित्तव्ययायाससाध्य-यागाद्यकरणप्रसङ्गः, अतो नायं दोषः अतएवेच्छानायाः कृतेर्निर्वाहार्थं यागाद्यनुष्ठान-स्योपयोगित्वमिति सूचयितुमाह, कारिकायां प्रवृत्तिरिति, अत्र विधिप्रस्तावे, टीकायां चिकीर्षात इति इदं कृत्या साधयामीत्येवंरूपकृतिसाध्यत्वप्रकारकेच्छात इत्यर्थः, कार्यत्वं

तज्ज्ञापकोऽथ वेति । इष्टसाधनत्वानुमापक आप्ताभिप्रायो विधिप्रत्ययार्थः ॥ ६ ॥

प्रवृत्तिप्रयोजकेच्छाहेतुज्ञानविषयं परिशेषयति,—

**इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः ।**
**असत्त्वात् प्रत्ययत्यागात् कर्त्तृधर्मौ न सङ्करात् ॥७॥**

स्पन्दस्य कर्त्तृधर्मस्य प्रवृत्तिप्रयोजकत्वे आत्मानं विजानीयादित्यत्राप्रवृत्तिप्रसङ्गात्, ग्रामं गच्छतीत्यतः प्रवृत्त्यापत्तेश्च । यत्नस्य विधित्वे दोषमाह, अप्रवृत्तेः, आख्यातान्तरेण यत्ने बोधितेऽपीष्टसाधनत्वाप्रतिसन्धाने अनिष्टसाधनत्वज्ञाने वाऽप्रवृत्तेः । इच्छाया विधित्वे दोषमाह विरोधत इति । इच्छाया विधित्वे इच्छयैव तज्ज्ञानं जननीयम्, इच्छाया ज्ञानेन चेच्छा जननीया, इत्यन्योन्या-

---

कृतिसाध्यत्वं, विधिरितीति विधिप्रत्ययार्थ इत्यर्थः, इष्टसाधनत्वानुमापक इति तथाच इष्टसाधनत्वस्यान्यलभ्यत्वेन न विध्यर्थत्वम् अनन्यलभ्यः शब्दार्थ इति नियमात्, आप्ताभिप्रायस्य अनन्यलभ्यत्वेन शब्दार्थत्वमिति भावः ॥ ६ ॥

प्रवृत्तीति, प्रवृत्तिप्रयोजकचिकीर्षाहेतुज्ञानस्य कृतिसाध्यत्वेष्टसाधनत्वविषयकत्वं पर्यवसितुं विचारयतीत्यर्थः, चेष्टात्मकस्पन्द-प्रयत्न-चिकीर्षाभेदेन त्रिविधस्य कर्त्तृधर्मस्य विधित्वे दोषमाह, इष्टेत्यादि ।, टीकायां कर्त्तृधर्मस्येति, न च स्पन्दस्य शरीरवृत्तित्वेन कथं कर्त्तृधर्मत्वमिति वाच्यम् । समवायावच्छेदकत्वान्यतरसम्बन्धेन कृत्याश्रयस्य कर्त्तृपदेन विवक्षितत्वात् । प्रवृत्तिप्रयोजकत्वं विषयतया प्रवृत्तिहेतुज्ञाननिष्ठजनकतावच्छेदकत्वं, अप्रवृत्तिप्रसङ्गादिति इष्टहानेरित्यंशस्य विवरणं, तथाच आत्मानं विजानीयादिति वाक्यात् चेष्टात्मकस्पन्दानवगमेन प्रवृत्त्यभावप्रसङ्ग इति भावः । प्रवृत्त्यापत्तेरिति अनिष्टाप्तेरित्यंशस्य विवरणं, तथाच ग्रामं गच्छतीतिवाक्यात् चेष्टात्मकस्पन्दस्यावगमात् प्रवृत्त्यापत्तिरिति भावः । यत्नस्येति कर्त्तृधर्मस्येत्यादिः, आख्यातान्तरेण लड़ादिना । इच्छाया विधित्व इति चिकीर्षाया विधित्व इत्यर्थः, इत्यन्योन्याश्रय इति, तथाच विध्यर्थज्ञानजन्या चिकीर्षा प्रवृत्तिजनिकेति नियमात् प्रवृत्त्यनुकूलेच्छा विध्यर्थ-

थयः, तदिदमुक्तं विरोधत इति। नन्विच्छाज्ञानं लिङा जननीयम् इत्यत्राह, असत्त्वादिति। इच्छाज्ञाने जाते प्रवृत्तिहेतुस्वरूपसदिच्छाऽभावात् प्रवृत्तिर्न स्यात्, इच्छायाः स्वरूपसत्या एव प्रवृत्तिहेतुत्वात्। न च लिङ्श्रवणकाले इच्छा स्वरूपसतीत्यर्थः। ननु लिङेव इच्छाजनिका इत्यत्राह, प्रत्ययत्यागादिति। इच्छाकारणत्वेन गृहीतस्य, प्रत्ययस्य ज्ञानस्य कारणस्य त्यागापत्तेः व्यभिचारादित्यर्थः। लिङ्श्रुतिकाले सुखत्वादिप्रकारकधीजन्येच्छा लिङर्थ इत्यत्राह, सङ्करादिति। इष्टसाधनताज्ञानस्य उपायेच्छाहेतोरवश्यं स्वीकारात् तत्र च कारणान्तराभावात् लिङ्पदमेव कारणम्, अतः फलेच्छाज्ञानं न प्रवृत्तिहेतुः, तद्विनापि प्रवृत्तिसम्भवात्। तथाच सङ्करादिष्टसाधनत्वज्ञानरूपसाधनसञ्चारत्वात्, इच्छाज्ञानस्य इच्छाजनकत्वे मानाभावेन तस्य लिङ्पदजन्यत्वे मानाभावाच्चेति ॥ ७ ॥

---

ज्ञानमपेक्षते, इच्छारूपविध्यर्थज्ञानञ्च लौकिकमानसप्रत्यक्षरूपमिति तच्च लौकिकप्रत्यक्षहेतुविषयरूपा इच्छा अपेक्षणीयेत्यन्योन्याश्रय इति भावः। लिङा जननीयमिति तथाच लौकिकप्रत्यक्ष एव विषयस्य हेतुत्वेन शाब्दात्मकेच्छाज्ञाने तस्याहेतुत्वाद्वान्योन्याश्रय इति भावः। प्रवृत्तिर्न स्यादिति असत्त्वादित्यंशस्य विवरणं, तथाच स्वरूपसदिच्छायाम् इच्छाज्ञानस्य न हेतुत्वमिति भावः। इच्छाजनिकेति इच्छाज्ञानजननीति शेषः, ज्ञानस्येति इष्टसाधनताज्ञानस्येत्यर्थः, व्यभिचारादिति इष्टसाधनताज्ञानरूपकारणमन्तरं लिङा इच्छोत्पत्तौ कारणासत्त्वे कार्यसत्त्वरूपव्यतिरेकव्यभिचारादित्यर्थः। फलेच्छाज्ञानं उपायेच्छां प्रति हेतुः इति मतेनाशङ्कते, लिङ्श्रुतिकाल इति, सुखत्वादिप्रकारकधीजन्येति सुखादिरूपफलेच्छेत्यर्थः, तथाच लिङा फलेच्छाज्ञानं जायते ततः चिकीर्षारूपोपायेच्छा ततः प्रवृत्तिरिति विधिवाक्यस्य प्रवर्तकत्वमिति भावः। तत्र च इष्टसाधनत्वरूप च, कारणान्तराभावात् लिङ्पदातिरिक्तकारणाभावात्। ननु फलेच्छाज्ञानस्य कारणत्वे इष्टसाधनत्वज्ञानहेतुत्वं न बाधकमित्यत आह, तद्विनापीति फलेच्छाज्ञानं विनापीत्यर्थः, इष्टसाधनत्वज्ञानरूपसाधनसञ्चारत्वादिति सङ्करादित्यस्य विवरणम्, अवश्यक्लृप्तेष्टसाध-

ननु यत्नज्ञानमेव प्रवर्त्तकमस्तु, आख्यातान्तरञ्च न यत्नवाचकम्, अनुकूलव्यापारमात्र एव आख्यातशक्तिः, रथोगच्छतीत्यादौ तथा कल्पनात्, तत्राह,—

कृताकृतविभागेन कर्त्तृरूपव्यवस्थया ।
यत्न एव कृतिः, पूर्वा परस्मिन् सैव भावना ॥ ८ ॥

घटः कृतोऽङ्कुरो न कृत इति व्यवहारात् कुलालादिः कर्त्ता न कारकान्तरमिति कृञ्धात्वर्थः कृतिः। ननु यत्नपदपर्य्यायता स्यादत आह, पूर्वेति, परस्मिन्नुत्तरकालवर्त्तिनि फले विद्यमाने सैव कृतिरेव पूर्वा, साधनीभूता, भावना, फलानुकूलतापन्नयत्न एवाख्यातार्थः। यद्वा फलानुकूलव्यापारधात्वर्थप्रचयजनिका पूर्वा-

---

नताज्ञानेन फलेच्छाज्ञानस्य अन्यथासिद्धत्वादित्यर्थः। उपसंहरति, इच्छाज्ञानस्येच्छाजनकत्व इति ॥ ७ ॥

आख्यातान्तरञ्चेति लङादिकञ्चेत्यर्थः, तथाच ग्रामं गच्छतीति वाक्यस्य यत्नाबोधकत्वान्न प्रवर्त्तकत्वमिति भावः। कारिकायां कृताकृतविभागेनेति घटः कृतः अङ्कुरो न कृत इति विभागेन कर्त्तृरूपव्यवस्थया कर्त्तृत्वव्यपदेशस्य प्रतिनियतत्वेन यत्न एव कृतिः करोतेरर्थः, ननु यत्नस्य करोत्यर्थत्वेऽपि कथमाख्यातार्थत्वमित्यत आह, कारिकायां पूर्वेति, परस्मिन् उत्तरकालवर्त्तिनि फले पूर्वा साधनीभूता सैव कृतिरेव भावना भाव्यते फलमनया इति व्युत्पत्त्या आख्यातपदवाच्या इति समुदितकारिकार्थः। टीकायां घटः कृत इत्यादि तथाच क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वप्रतिसन्धानाप्रतिसन्धानाभ्यामेव घटाङ्कुरयोः कृताकृतव्यवहारात् कुलालादिरेव कर्त्तेत्यर्थः, न कारकान्तरमिति न दण्ड-चक्रादिकारकान्तरमित्यर्थः, तथाच यदि व्यापारमात्रस्य करोत्यर्थत्वं तदा दण्ड-चक्रादिव्यापारस्यापि कार्य्यजनकत्वात् दण्ड-चक्रादावपि कर्त्तृव्यवहारः स्यादिति भावः। फलानुकूलतापन्नयत्न एवेति तथाच करोतेः शक्यतावच्छेदकं यत्नत्वम्, आख्यातस्य शक्यतावच्छेदकं फलानुकूलतापन्नयत्नत्वम् इति शक्यतावच्छेदकभेदात् करोतेर्न यत्नपदपर्य्यायत्वमिति भावः। ननु पचत्यपि भाविप्रयत्नप्रागभावस्य उत्पन्नयत्नध्वंसस्य सत्त्वात् पच्यत्यपाक्षीदित्यपि प्रयोगः

परस्मिन् पूर्वापरीभूतत्वे सति, कृतिराख्यातार्थः, तथाच प्रयत्नवत्त्वमनुकूलत्वं पूर्वापरीभूतत्वमिति त्रयमर्थः॥ ८॥

ननु धातुना यत्नः प्रतीयते, आख्यातस्य च अनुकूलव्यापारमात्रार्थकत्वम्, आक्षेपादेव च यत्नलाभ इत्यत आह,—

**भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः।**
**तया विवरणध्रौव्यादाक्षेपानुपपत्तितः॥ ९॥**

तया कृत्या तद्वाचकपदेन, पचति पाकं करोतीति विवरणात् तत्र शक्तिः। अनुकूलव्यापारस्य यत्नानाक्षेपकत्वात्। वर्त्तमान-

---

आदित्यत आह, यत्नेति, पूर्वापरीभूतत्वे सतीति, तथाच पूर्वापरीभूतकृतित्वमेवाख्यातार्थः तादृशान्यतमप्रयत्नसत्त्वे पचतीति तेष्वाद्यप्रयत्नप्रागभावसत्त्वे पक्ष्यतीति चरमप्रयत्नस्य ध्वंससत्त्वे अपाक्षीदिति प्रयोगस्य प्रामाणिकत्वात् पूर्वापरीभूतान्यतमयत्नस्य पचतीति व्यवहारनियामकत्वं, तादृशान्यतमयत्नान्यतमध्वंसस्य अपाक्षीदिति व्यवहारनियामकत्वमिति भावः। त्रयमर्थः इति, गुरुधर्मावच्छिन्ने एकशक्तिकल्पनामपेक्ष्य लघुधर्मावच्छिन्ने विभिन्नशक्तिकल्पनायां लाघवमिति मतेनेदम्। न च विभिन्नशक्तिकल्पने कथं विशिष्टार्थलाभ इति वाच्यम्। विशिष्टार्थस्य अन्वयमर्यादालभ्यत्वादिति॥ ८॥

धातुना कृञ्धातुना, अनुकूलव्यापारार्थकत्वमिति रथो गच्छतीत्याद्यनुरोधादिति शेषः। आक्षेपादेव अनुमानादेव, अनुमानञ्च चैत्रः पचतीत्यादौ चैत्रः पाकानुकूलकृतिमान् पाकानुकूलव्यापारवत्त्वादित्येवंरूपम्। कारिकायां सर्वाख्यातस्य गोचर इति सर्वाख्यातजन्यप्रतीतिविषय इत्यर्थः। टीकायां तत्र शक्तिरिति तत्र यत्ने आख्यातस्य शक्तिरित्यर्थः, बाधकं विना विवरणस्य शक्तिग्राहकत्वादिति भावः। न च रथो गच्छतीत्यत्र का गतिरिति वाच्यम्। तत्र लक्षणया अनुकूलव्यापारबोधनात्। अचेतनेऽपि भावादिति काष्ठादौ पाकानुकूलव्यापारस्य सत्त्वादित्यर्थः, तथाच व्यभिचारित्व उक्तानुमानं न सम्भवतीति भावः। ननु आख्यातस्य यत्नार्थकत्वे ओदनमिति कर्मपदोत्तरं पचति भुङ्क्ते वेति आख्यातार्थविशेषजिज्ञासा न सम्भवति विशेषजिज्ञासां प्रति सामान्यज्ञानस्य हेतुतया कर्मपदस्य यत्नसामान्यानुपस्थापकत्वात् आख्यातस्य व्यापारार्थकत्वे च

पाकानुकूलव्यापारस्याचेतनेऽपि भावात्। ओदनमिति कर्मपदोत्तरं पचति भुङ्क्ते वेति जिज्ञासा च कर्मणः कृतिव्याप्यत्वप्रतिसन्धानेन यथा पचतीत्यनन्तरं कर्मादौ जिज्ञासा॥ ९॥

ननु कर्त्तुरपि विवरणात् तत्रापि शक्तिराख्यातस्य स्यात् तत्राह,—

**आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना।**
**संख्येयमात्रलाभे तु साकाङ्क्षेण व्यवस्थितिः॥१०॥**

आख्यातवाच्यया संख्यया आश्रयस्य आक्षेपादेव लाभान्न कर्त्तरि शक्तिकल्पना। प्रथमान्तपदोपस्थाप्यत्वे सति आख्यातार्थविशेष्यत्वमाक्षेपलभ्यत्वम्। भुक्त्वा इत्यादौ क्त्वान्तार्थानन्तर्य्यवार-

---

कर्म्मपदस्य परसमवेतव्यापारजन्यफलविशिष्टबोधकतया व्यापारसामान्योपस्थापकत्वात् व्यापारसामान्योपस्थितौ व्यापारविशेषजिज्ञासासम्भवात् इत्याशङ्कापनेतुमाह, ओदनमितीति, तथाच कर्म्मपदस्य यद्घटितार्थानुपस्थापकत्वेऽपि कर्म्मपदार्थस्य कृतिव्याप्यत्वप्रतिसन्धानेन कृतिसामान्योपस्थित्या कृतिविशेषजिज्ञासासम्भवात्। एतदेव द्रढयति यथेत्यादिना, कर्म्मादौ जिज्ञासा ओदनं तेमनं वा इति कर्म्मविशेषजिज्ञासेत्यर्थः। तथाच आख्यातस्य कर्म्माद्यनुपस्थापकत्वेऽपि आख्यातार्थकृतौ कर्म्मव्यापकत्वप्रतिसन्धानेन कर्म्मसामान्योपस्थित्या पचतीत्यनन्तरं यथा कर्म्मविशेषजिज्ञासा तथा ओदनमित्यनन्तरं कर्म्मपदकृतिव्याप्यत्वप्रतिसन्धानेन कृतिसामान्योपस्थित्या कृतिविशेषजिज्ञासेति भावः॥ ९॥

विवरणादिति पचतीत्यस्य पाकयत्नवानिति विवरणादित्यर्थः। कारिकायां आक्षेपलभ्य इत्यादि, संख्येये संख्याश्रये कर्त्तरि, नाभिधानस्य कल्पना न शक्तेः कल्पना, तथाचानन्यलभ्यः शब्दार्थ इति नियमात् कर्त्तुर्नाख्यातपदवाच्यत्वम्। ननु आख्यातपदप्रतिपाद्यसंख्यायाः कर्त्रैवान्वयः न तु कर्म्मणि इति नियमः कथमुपपद्यते इत्याशङ्काह, संख्येयमात्रलाभे त्वित्यादि, तुरप्यर्थे, संख्यान्वयबलेन संख्याश्रयस्य कर्त्तुः कर्म्मणो वा लाभसम्भवेऽपीत्यर्थः, साकाङ्क्षेण भावनासाकाङ्क्षेण, भावनान्वयबोधानुकूलानुपूर्व्वीमच्छब्दप्रतिपाद्यत्वेनेति यावत्, व्यवस्थितिः संख्यान्वयनियमः, तथाच यत्र भावनान्वयः

णाय विशेष्यदलम् । सुप्यते इत्यादौ वर्त्तमानत्वविशेष्यत्वं स्वापस्यापीति सत्यन्तदलम् । चैत्रस्तण्डुलं पचतीत्यत्र द्वितीयार्थकर्मतावच्छत्वात् तण्डुलस्य, न तत्र भावनाकाङ्क्षेति भावना शुद्धप्रातिपदिकार्थान्वयिनी । अतएव यं यं भावनाऽन्वेति तं तं संख्यापीति, एकपदोपात्तभावनान्वयबलात् कर्त्रादिसंख्याभिधान एव प्रथमेति । एवं कर्मापि नाख्यातपदवाच्यम् ॥ १० ॥

---

तत्रैव संख्यान्वयनियमात् कर्त्तृविहिताख्यातोपस्थाप्यसंख्यायाः कर्त्तरि, कर्मविहिताख्यातोपस्थाप्यसंख्यायाः कर्मणि अन्वय इति नियम इति समुदितकारिकातात्पर्यम् ।

टीकायां आक्षेपादेवेति अन्वयबलादेवेत्यर्थः । ननु आक्षेपलभ्य इत्यत्र किमिदम् आक्षेपलभ्यत्वं, न तावत् संख्याविशिष्टकानुमितिविषयत्वं, शब्दोपस्थापितसंख्यायास्तदुपस्थापितेनैवान्वयनियमादित्यत आह, प्रथमान्तेति, विशेष्यदलमिति, तथाच मुख्यविशेष्यस्य "लिङ्ग-संख्याविनिर्मुक्तात् सुः पदत्वार्थमव्ययात्" इति सूत्रेण प्रथमान्तत्वेऽपि विशेष्यदलासत्त्वादेव वारणमिति भावः । भावनान्वये कर्मणो निराकाङ्क्षत्वे युक्तिमाह, चैत्रस्तण्डुलमित्यादि, कर्मतावच्छत्वात् कर्मत्वविशेषणत्वतात्पर्यविषयत्वात्, तथाच, मुख्यविशेष्य एव भावनान्वयनियमेन कर्मणोमुख्यविशेष्यत्वासत्त्वम इति भावः । ननु तर्हि भावनायाः कुत्रान्वय इत्याकाङ्क्षायामाह, भावनेति, शुद्धप्रातिपदिकार्थान्वयिनी निर्व्यापारत्वेनोपस्थितप्रातिपदिकार्थान्वयिनीत्यर्थः । अग्निना चैत्र ओदनं पचतीत्यत्र चैत्रपदार्थस्य निर्व्यापारत्वेनोपस्थितस्य भावनात्मकव्यापारसाकाङ्क्षत्वात् भावनायाश्चाश्रयाकाङ्क्षत्वात् तेनैव भावनान्वेति, न कर्म-करणादिना, द्वितीयादिना तस्य व्यापारवत्त्वेनोपस्थितेर्व्यापारान्तरनिराकाङ्क्षत्वात्, न हि व्यापारवन्तं व्यापार आश्रयते । ओदनः पच्यते चैत्रेणेत्यत्र कर्त्तुर्व्यापारवत्त्वेनोपस्थितेर्न तत्र भावनान्वयः किन्तु प्रथमानिर्दिष्टेन कर्मणा, तस्य व्यापारवत्त्वेनानुपस्थितेस्तत्साकाङ्क्षत्वात् । चैत्रेण सुप्यते इत्यत्र तु कर्त्तुर्व्यापारवत्त्वेनोपस्थितेः कर्मपदाभावात् धात्वर्थेनैव संख्याया अन्वय इत्यादिकमत्र विभावनीयम् । ननु कर्मणो भावनान्वयनिराकाङ्क्षत्वेऽपि संख्यान्वये किं बाधकमित्यत आह, यं यमित्यादि, अत्र हेतुमाह, एकपदोपात्तेति, तथाच भावनायाः संख्यायाश्च एकपदोपस्थाप्यत्वरूपानतिरिक्तत्वात् एकत्रान्वयिन्येवापरस्यान्वय इति भावः । ननु

नन्वस्तु कर्मधर्मो विधिः, तत्राह,—

अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः।
तदलाभान्न कार्य्यञ्च न क्रियाऽप्यप्रवृत्तितः ॥ ११ ॥

कर्म स्वर्गादि, तद्धर्मः कार्य्यत्वं यदि विध्यर्थः तत्राह, अतिप्रस-ङ्गान्न फलम्। स्वर्गे कार्य्यत्वज्ञाने सति स्वर्गासाधनेऽपि प्रवृत्त्यापत्तेः। यदि कर्म अपूर्वं, तद्धर्मः कार्य्यत्वं विध्यर्थस्तत्राह, नापूर्वं तत्त्व-हानितः। शाब्दबोधात् पूर्वं नोपस्थितमित्यत एवापूर्वं, पूर्वमुप-स्थितौ च न तत्त्वम्, अनुपस्थितौ च कथं तत्र सन्निधीः। ननु कार्य्यत्वरूपेण सन्निधीः, शाब्दबोधे तु योग्यतया अपूर्वस्य कार्य्य-विशेषस्य भानं, तत्राह, तदलाभान्न कार्य्यञ्चेति। नित्यनिषेधा-पूर्वयोरलाभप्रसङ्गात्, तत्र फलकामस्य नियोज्यस्याभावात्। यद्वा

---

आख्यातेन कर्त्तुरनुक्तत्वे "उक्तात् सुग्रीवः" इति सूत्रेण कथं कर्त्तृबोधकपदोत्तरं प्रथमा-निर्वाह इत्याशङ्काह, कर्त्रादिसंख्याभिधान एवेति, तथाच यत्पदोपस्थाप्ये कर्त्रादि-संख्यान्वयस्तत्पदोत्तरं प्रथमाविभक्तिरिति तादृशसूत्रस्य तात्पर्य्यमिति भावः। कर्मापीति चैत्रेण ओदनः पच्यते इत्यादावित्यादि, नाख्यातपदवाच्यमिति, तथाच कर्मण आक्षेप-लभ्यत्वात् न कर्मणि कर्मविहिताख्यातपदवाच्यत्वमिति भावः ॥ १० ॥

कर्मधर्म इति कर्मणां स्वर्गादीनां धर्मः कार्य्यत्वं विध्यर्थ इत्यर्थः, तथाच क्रियत इति व्युत्पत्त्या कर्मपदेन यदि फलं स्वर्गाद्युच्यते, तन्निष्ठकार्य्यत्वज्ञानं प्रवर्त्तकम्, अथवा कर्मपदेन स्वर्गसाधनमपूर्वं तन्निष्ठकार्य्यत्वज्ञानं प्रवर्त्तकम्, अथवा कर्मपदेन अपूर्वसाधन-यागादिकं, तन्निष्ठकार्य्यत्वज्ञानं प्रवर्त्तकमिति भावः। आद्ये दोषमाह, अतिप्रसङ्गा-दिति, न फलमिति फलीभूतस्वर्गादिनिष्ठकार्य्यत्वं न विध्यर्थ इत्यर्थः। द्वितीये दोष-माह, यदीत्यादि, कार्य्यत्वरूपेण सन्निधीरिति कार्य्यत्वरूपेण घटादौ सन्निधय इत्यर्थः, शाब्दबोध इति यागविषयकं स्वर्गकामकार्य्यम् इत्यन्वयबोध इत्यर्थः, योग्यतया याग-जन्यत्वरूपयागविषयकत्वान्वयप्रयोजकरूपवत्तया, तथाच धर्मिविशेषमनन्तर्भाव्यैव तत्-प्रकारकशाब्दबोधे तत्प्रकारकशाब्दविषयस्य हेतुत्वात् कार्य्यत्वेन घटादौ सिद्धपदसन्नि-

ननु कार्य्यत्वेनोपलक्षितायामपूर्वव्यक्तौ शक्तिग्रहः, गन्धवत्त्वेनोपलक्षितायां पृथिवीत्वविशिष्टायां व्यक्तौ पृथिवीपदस्येव इत्यत्राह, तदलाभात्। अपूर्वत्वविशिष्टापूर्वव्यक्त्यनुपस्थितेः, गन्धवत्त्वे नापि हि पृथिवीत्वविशिष्टस्य स्मरणमनुमानं वा सम्भवति, प्रागनुभवात्, प्रकृते तथात्वेऽपूर्वत्वव्याघातादित्यर्थः। ननु कर्म यागादि, तद्धर्मः कार्य्यत्वं विधिः, तत्राह, न क्रियाऽपीति। अनिष्टसाधनताधीकाले प्रवृत्त्यदर्शनात्। अत्र अपिना नापूर्वमपि, उक्तदोषादित्यर्थः॥११॥

ननु करणं शब्दः तद्धर्मोऽभिधा, तज्ज्ञानं प्रवर्त्तकम्। अत एवाहुः, "अभिधां भावनामाहुरन्यामेव लिङादयः। अर्थात्म-

---

यज्ञात् योग्यतावलेन कार्य्यत्वप्रकारकापूर्वमुख्यविशेष्यकान्वयबोध इति भावः। नित्य-विधेयापूर्वयोरिति सन्ध्यामुपासीतेति नित्ये अष्टम्यां मांसं नाश्नीयादिति निषेधे च अपूर्वालाभप्रसङ्गादित्यर्थः, तथाच काम्यस्थले चात्रविनाशिनां यागादीनां कालान्तर-भावि स्वर्गादिफलसाधनत्वान्यथानुपपत्त्या अपूर्वमवश्यं कल्पनीयं, नित्य-निषेधस्थले फला-भावेन अपूर्वकल्पनायां प्रमाणाभाव इति भावः। नियोज्योऽपि प्रवर्त्तनीयपुरुषोऽपीत्यर्थः, तथाच नियुज्यते: प्रवर्त्तनार्थकत्वात् कर्मणि अनट्प्रत्ययेन तत्कर्म उच्यते, प्रवर्त्तनाकर्म च तज्जन्यप्रवृत्तिमान् स एव नियोज्य इति भावः। पृथिवीपदस्येवेति, तथाच यथा गन्धवती पृथिवीपदशक्या इत्युपलक्षणविधया शक्तिग्रहे उत्तरकालं पृथिवीत्वेन शाब्द-बोधः तथा कार्य्यं विधिशक्यमिति कार्य्यत्वोपलक्षिते अपूर्वे शक्तिग्रहे उत्तरकालम् अपूर्वत्वेन अपूर्वस्य शाब्दबोध इति पूर्वपक्षतात्पर्य्यम्। प्रागनुभवादिति तथाच गन्ध-वत्त्व-पृथिवीत्वयोः पूर्वानुभवजनितसंस्कारेण स्मरणेन सहचारदर्शनेन पूर्वगृहीतव्याप्ति-प्रतिसन्धानेनानुमितेर्वा सम्भवात् तदन्यतरत्-प्रवृत्तिनिमित्तकत्वेऽपि गन्धवत्त्वोपाधित्वेन सम्भवत्वात् पृथिवीत्वस्य च जातित्वेनाखण्डत्वात् तत्रैव शक्तिः कल्प्यते, प्रकृते तु अपूर्वत्वाप्रतीतौ तथा न सम्भवतीति सिद्धान्ततात्पर्य्यम्। तृतीयकल्पमाशङ्क्य निषेधति नन्वित्यादिना॥११॥

भट्टमतमाशङ्क्य निषेधति, नन्वित्यादिना, करणं शब्द इति शाब्दबोधकरणं शब्द इत्यर्थः, श्रूयमाणपदस्य शाब्दबोधकरणत्वमिति मतेनेदम्। अभिधा शब्दनिष्ठव्यापार-

भावना त्वन्या सर्वाख्यातस्य गोचरः॥" अभिधा यागप्रवर्त्तिका इति धीः शब्दादाख्यातार्थश्च उत्पादना उत्पत्त्यनुकूलकृतिरूपेयमित्यत्राह,—

**असत्त्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी।**
**वाधकस्य समानत्वात् परिशेषोऽपि दुर्घटः॥१२॥**

---

विशेषः, तथाचोक्तं "शब्दव्यापारभेदोवा कार्य्यभेदोऽथवा विधिः।" इति। अभिधामित्यादि, लिङादयः वैदिकलिङादयः, अन्यामेव अर्थभावनातो भिन्नामेव, अभिधाम् अभिधाख्यां, भावनां व्यापारविशेषम्, आहुः बोधयन्ति। अन्या शब्दभावनातोभिन्ना, अर्थात्मभावना अर्थः आत्मा आश्रयो यस्या इति व्युत्पत्त्या अर्थनिष्ठा भावना प्रवृत्त्यात्मकव्यापारविशेषः, सर्वाख्यातस्य गोचरः सामान्यत आख्यातत्वेन आख्यातपदप्रतिपाद्यः। तथाच वैदिकलिङ आख्यातत्वेन विधित्वेन च प्रवृत्तिरभिधा च द्वयमेवार्थः इति भावः। शब्दादिति वैदिकलिङात्मकशब्दादित्यर्थः, ननु विधिप्रत्ययेन अभिधा यागप्रवृत्तिजनिका इति प्रतीतिः कथं सम्भवति इत्यत आह, आख्यातार्थश्चेति, तथाच आख्यातार्थ-विध्यर्थयोर्जन्य-जनकभावसम्बन्धस्वीकारात् यजेतेत्यादौ विधित्वेन प्रतिसन्धीयमानया लिङा उपस्थाप्यायाम् अभिधायाम् आख्यातत्वेन प्रतिसन्धीयमानया लिङा उपस्थाप्यायाः प्रवृत्तेः जनकत्वसम्बन्धेनान्वयात् प्रवृत्तौ यजधात्वर्थयागस्य विषयित्वसम्बन्धेनान्वयाच्च यजेतेत्यनेन अभिधा यागप्रवर्त्तिका इति बोधः सुलभ इति भावः। भट्टानामयमाशयः, पुरुषस्य प्रवृत्तिर्द्विविधा कश्चित् स्वेच्छया कश्चिच्च परप्रवर्त्तनया च, आचार्य्यप्रेरितोऽहं गामानयामि न तु स्वेच्छया इति व्यवहारात्, तथाच यत्र स्वेच्छया प्रवृत्तिः तत्र इष्टसाधनत्वज्ञानं प्रवृत्तिजनकं, यत्र च परप्रवर्त्तनया प्रवृत्तिः तत्र प्रवर्त्तनाज्ञानं प्रवृत्तिजनकं, प्रवर्त्तना च प्रवर्त्तयितृनिष्ठव्यापारविशेषः, स च चेतनप्रवर्त्तयितृस्थले अहमिमं प्रवर्त्तयामीत्याकारकेच्छात्मकः, अचेतनवेदादिप्रवर्त्तयितृस्थले लिङादिशब्दसमवेताभिधानामकातिरिक्तपदार्थः, न च अभिधायाः शब्दसमवेतत्वे शब्दस्य समवायिकारणत्वं स्यादिति वाच्यम्। भट्टमते शब्दस्य द्रव्यत्वेन तदापत्त्यसम्भवात्। न च क्वचिदिष्टसाधनत्वज्ञानं कारणं क्वचिच्च प्रवर्त्तनाज्ञानमित्यननुगमः इति वाच्यम्। कार्य्यतावच्छेदककोटौ अव्यवहितोत्तरत्वस्य प्रवेशादेवानुगमसम्भवात्। न च इच्छाभिधाभेदेन भिन्नायाः

अभिधायां मानाभावात्, अभिधाशब्दतोऽभिधाज्ञानेऽपि अप्रवृत्तेः। गरीयसी उचिता, लिङर्थतयेति शेषः। ननु अन्यस्य लिङर्थत्वे बाधात् परिशेषेणाभिधा लिङर्थ इत्यत आह, बाधकस्येति। प्रकृतेऽपि बाधकसम्भवात्॥ १२॥

---

प्रवर्त्तनायाः ज्ञानस्य कथमनुगतरूपेण कारणत्वं सम्भवतीति वाच्यम्। प्रवर्त्तयितृनिष्ठव्यापारत्वेन प्रवर्त्तनाया अनुगमसम्भवात्। भावना हि द्विविधा शब्दभावना अर्थभावना च, तयोरेव किं केन कथमित्यंशत्रयसापेक्षत्वं, तत्र च शब्दभावना शब्दनिष्ठव्यापारतया शब्दव्यापारपदवाच्या, तदुक्तं, "लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः। सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते॥" तस्याः किं भाव्यमित्याकाङ्क्षायामाह पुरुषप्रवृत्तिरिति पुरुषप्रवृत्तिरेव भाव्या, केनेत्याकाङ्क्षायामाह सम्बन्धबोध इति सम्बन्धबोधः प्रवर्त्तनायां लिङः शक्तिग्रहः, करणं सहकारी, प्ररोचना प्रशस्तफलत्वबोधिका अर्थवादिकी स्तुतिः, सा च प्रवृत्तिप्रतिबन्धकवैधर्म्यनिरासेनोपयुज्यते, प्रशस्तफलज्ञाने इष्टापेक्षया अधिकदुःखजनकताज्ञानं न सम्भवति तदभावे च कारणाभावान्न ... इति। अर्थभावना तु कर्तृव्यापारस्वरूपा तत्र च यागः करणतया, स्वर्गः कार्यतया, दर्श-पौर्णमासादियागाङ्गीभूतप्रयाजादियागविशेषः इतिकर्त्तव्यतया अन्वेति, तथाच स्वर्गकामीयवैदिक यागकरणकस्वर्गोत्पादकप्रयाजादीतिकर्त्तव्यताकप्रवृत्तिप्रयोजक-शक्तिग्रहकरणक-प्ररोचनाङ्गकव्यापारवान् शब्द इत्यन्वयबोध इति भावः। यद्यपि स्वर्गभावनाया, यागरूपाया न यागकरणकत्वं किन्तु यागकारणत्वं यागस्य कृतिसाध्यतयाः सर्वसिद्धत्वात् तथापि स्वर्गकर्मकभावनाया विशेषणीभूतस्वर्गकरणतैव स्वर्गकर्मकत्वविशिष्टभावनाकरणत्वं यागस्येति ध्येयम्। न च स्वेच्छाजन्यप्रवृत्तिस्थल इव प्रवर्त्तनाजन्यप्रवृत्तिस्थलेऽपि इष्टसाधनताज्ञानस्यैव कारणत्वं न तु प्रवर्त्तनाज्ञानस्येति वाच्यम्। व्यापारभिन्नस्य कारणस्य स्वनिष्ठव्यापारद्वारैव परसमवेतव्यापारजनकत्वनियमात् यथा दण्डरूपघटकारणस्य स्वनिष्ठस्पन्दरूपव्यापारद्वारैव चक्रसमवेतस्पन्दजनकत्वं तथा लिङः कारणस्य स्वनिष्ठाभिधारूपव्यापारद्वारैव प्रवर्त्तमानपुरुषनिष्ठप्रवृत्तिरूपव्यापारजनकत्वस्य वक्तव्यत्वादिति। मानाभावादिति, न च व्यापारभिन्नस्य कारणस्येत्यादिनियम एव मानमिति वाच्यम्। चक्षुरिन्द्रियकरणव्याप्तिज्ञानादौ तादृशनियमस्य व्यभिचरितत्वा

ननु करणस्य यागादेर्धर्मं इष्टसाधनत्वं विध्यर्थोऽस्तु तत्राह,—

हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १३ ॥

विध्यर्थस्य इष्टसाधनताया हेतुत्वात् लिङ्गतयोपन्यासात्। न च स्वस्य स्वलिङ्गत्वमिति। अग्निकामो दारुणी मथ्नीयादित्युक्ते कुत इत्याकाङ्क्षायां वक्तारो वदन्ति, यतो दारुद्वयमथनमग्निसाधनमिति। अनुमानात् अर्थवादादिष्टसाधनताबोधानन्तरमपि विधेरनुमानात्। यदि चानुमितेनापि विधिना इष्टसाधनत्वमेव बोध्यं, तदा तदनुमानवैयर्थ्यम्। तरति मृत्युं तरति ब्रह्महत्यामित्यादौ मृत्यु-ब्रह्महत्यातरणकामोऽश्वमेधेन यजेतेति विध्यनुमानस्य सर्वतन्त्रसिद्धत्वात्। मध्यमादौ वियोगतः मध्यमोत्तमपुरुषे लिङ-

---

प्रमापकत्वासम्भवात्। अभिधायकत्वा इति अभिधा यागप्रवर्त्तिका इति वाक्यादपीत्यर्थः। न च लिङ्पदजन्यभावनाज्ञानस्य कारणत्वकल्पने गौरवदोष इति वाच्यम्। स्वेच्छाधीनप्रवृत्तौ कुम्भकारादिर्वाक्यादिष्टसाधनत्वज्ञानादेव प्रवृत्त्युपपत्तेरिष्टसाधनत्वस्य विध्यर्थत्वे लाघवात्। अन्यस्य कर्तृधर्मादेः, बाधात् पूर्वोक्तबाधात्। प्रकृतेऽपि अभिधाया लिङर्थत्वेऽपि। बाधकसम्भवात् मानाभावरूपबाधकसम्भवात् इति ॥ १२ ॥

प्राचीननैयायिकमतमाश्रित्य निषेधति, नन्वित्यादिना, कारिकायां हेत्वादिपदानन्तरम् इष्टसाधनत्वस्य न विध्यर्थत्वमिति पूरणीयम्। टीकायां विध्यर्थस्येति, स्वलिङ्गत्वमिति, तथाच विध्यर्थस्य इष्टसाधनतारूपत्वे साध्य-हेत्वोरविशेषेण इष्टसाधनत्वानुमापकत्वासम्भवः। आप्ताभिप्रायस्य विध्यर्थत्वे तु दारुद्वयमथनम् इष्टसाधनम् आप्ताभिप्रायविषयत्वादित्यनुमानं सम्भवतीति भावः। अग्निसाधनमितीति तथाच विधिनैव इष्टसाधनत्वबोधात् दारुद्वयमथनमग्निसाधनमिति वाक्यस्य वैयर्थ्यमिति भावः। ब्रह्महत्यामित्यादाविति आदिपदेन योऽश्वमेधेन यजते इति परप्रतीकसंग्रहः, अन्यत्र बाधके उद्देश्यतावच्छेदक-विधेययोः प्रयोज्य-प्रयोजकभावबोधस्य व्युत्पत्तिसिद्धत्वात् धनवान् सुखी इत्यत्र सुख-धनयोः प्रयोज्य-प्रयोजकभावबोधस्यैव अत्रापि मृत्युतरणाश्वमेधयोः प्रयोज्य-प्रयोजकभावस्य लाभेन अर्थवादस्य इष्टसाधनत्वबोधकत्वात् इष्टसाधनत्वस्य

इष्टसाधनतावियोगात्, कुर्याः कुर्यामित्यत्राज्ञादिकं प्रतीयते, आज्ञा त्वभिप्राय एवेति प्रथमपुरुषेऽपि इच्छैवार्थः। अन्यत्र क्लृप्तसामर्थ्यात् अध्येषणादिलिङां इच्छावाचकत्वकल्पनात्। निषेधानुपपत्तितः, न कलञ्जं भक्षयेदित्यत्रेष्टसाधनत्वनिषेधस्य बाधितत्वात्। बलवदनिष्टाननुबन्धित्वञ्च न विध्यर्थः, श्येनेनाभिचरन् यजेत इत्यादौ असम्भवात्। अप्रवर्त्तमानपुरुषस्य बलवद्द्वेषविषयत्वात् बलवद्द्वेषविषयदुःखजनकत्वसामान्याभावस्य बाधितत्वादिति ॥ १२ ॥

---

विध्यर्थत्वे अर्थवादेन विध्यनुमानवैफल्यमिति भावः। इष्टसाधनतावियोगादिति इष्टसाधनत्वाबोधकत्वादित्यर्थः। आज्ञादिकमित्यादिना संकल्पपरिग्रहः, कुर्या इत्यत्र आज्ञा, कुर्यामित्यत्र संकल्पः विध्यर्थः। आज्ञा त्वभिप्राय एवेति, तथाच यो वक्तुरिच्छाननुविदधानस्तन्संक्षोभाविष्टेति सा आज्ञा, या तु स्वकर्तव्यत्वेन इच्छा सा संकल्पः। अध्येषणादीत्यादिपदात् अनुज्ञा-सम्प्रश्न-प्रार्थनाशीःपरिग्रहः, श्रोतुः पूजा-सम्मानव्यञ्जिका इच्छा अध्येषणा, वारणाभावव्यञ्जिकेच्छा अनुज्ञा, अभिधानप्रयोजनेच्छा सम्प्रश्नः, लाभेच्छा प्रार्थना, शुभाशंसनमाशीः। इच्छावाचकत्वकल्पनादिति तथाच उत्तमपुरुषमध्यमपुरुषयोराज्ञारूपेच्छावाचित्वदृष्टान्तेन प्रथमपुरुषेऽपीच्छावाचित्वं बलवदनिष्टाननुबन्धीष्टसाधनतारूपेच्छात्वेन विधिप्रत्ययस्य साधनादिति भावः। बाधितत्वादिति कलञ्जभक्षणस्य तृप्तिरूपेष्टसाधनत्वेन इष्टसाधनत्वरूपविध्यर्थस्य बाधितत्वादित्यर्थः। न च न कलञ्जं भक्षयेदित्यत्र नञर्थविशेष्यक एवान्वयबोधो न तु नञर्थविधेयक इति वाच्यम्। नञ्घटितस्थले यस्य विधेयत्वं तदभावस्यैव नञा बोधनीयत्वव्युत्पत्त्या तादृशबोधासम्भवात्। ननु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वमेव विध्यर्थः तदभावस्तु न कलञ्जभक्षणे बाधित इत्याशङ्क्य निषेधति, बलवदित्यादि, श्येनेनेति, श्येनेति कर्मनामधेयम्, अभिचरन् शत्रुवधं कामयमान इत्यर्थः, असम्भवादिति तथाच श्येनस्य शत्रुवधद्वारा नरकोत्पादकत्वेन बलवदनिष्टाननुबन्धित्वासम्भवादिति भावः। ननु बलवत् बलवद्द्वेषविषयत्वं तथाच शत्रुवधार्थे श्येने प्रवर्त्तमानपुरुषस्य नरके बलवद्द्वेषाभावात् न तत्र विध्यर्थबाध इत्यत आह, अप्रवर्त्तमानपुरुषस्येति, श्येन इत्यादिः, बलवद्द्वेषविषयत्वादिति श्येनजन्यनरकस्य बलवद्द्वेषविषयत्वादित्यर्थः ॥ १२ ॥

स्वमतमाह,—

विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः।
अभिधेयोऽनुमेया तु कर्त्तुरिष्टाभ्युपायता ॥ १४ ॥’

प्रवृत्ति-निवृत्तिविषये आप्ताभिप्रायः लिङादिभिः प्रत्ययैरभिधेयः, इष्टसाधनता त्वनुमेया। वस्तुतस्तु ईश्वरेच्छायाः सर्वविषयक-

---

कर्त्रादिधर्मस्य विध्यर्थत्वं निरस्य परिशेषेण प्रयोक्तृधर्मस्याप्ताभिप्रायस्य विध्यर्थत्वं व्यवस्थापयति, स्वमतमाहेति। कारिकायां विधिरित्यादि, प्रवृत्त्यादावित्यादिपदेन निवृत्तिपरिग्रहः, सप्तम्यर्थ उद्देश्यत्वं, तथाच प्रवृत्ति-निवृत्त्युद्देश्यकवक्त्रभिप्रायो विध्यर्थः स एव लिङादिप्रत्ययैः अभिधेयः प्रतिपाद्यः, कर्त्तुरिष्टाभ्युपायता तु कर्त्तुरिष्टसाधनता तु, अनुमेया विधिवाक्यजन्यवक्त्रभिप्रायात्मकविध्यर्थरूपलिङ्गज्ञानजन्यानुमितिविषय इत्यर्थः, प्रयोजकस्तु यागो मम स्वर्गकामस्य बलवदनिष्टाननुबन्धीष्टसाधनं मत्कृतिसाध्यतयाप्तेनेष्यमाणत्वात् मत्पाककृतिसाध्यतयेष्यमाणभोजनवदित्याकारकः। न च वेदे वक्त्रभावात् कथमेषा लिङा बोधनीयेति वाच्यम्। कर्त्रभिन्नेच्छाया बोधने विधेः सामर्थ्याभावात् विधेरेव वेदवक्तरीश्वरे मानत्वादिति। आचार्यमते अखरसं दर्शयति वस्तुतस्त्विति, निषेधे चाथ इति आप्तेच्छाविषयत्वस्येश्वरेच्छाविषयत्वरूपस्य क्लृप्तत्वान्नियमः कलञ्जभक्षणेऽपि सम्भवाच्च इत्यर्थः। न च व्युत्पत्तिवैचित्र्येण विधिसमभिव्याहृतनञर्थः विशिष्यतथैवानीतीति कलञ्जभक्षणाभाव ईश्वराभिप्रेत इत्येवान्वयबोध इति वाच्यम्। अन्वयबोधसम्भवेऽपि आप्ताभिप्रायविषयत्वरूपस्य विध्यर्थस्य बलवदनिष्टाननुबन्धीष्टसाधनत्वानुमापकत्वासम्भवात् बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसाध्यशून्ये कलञ्जभक्षणे आप्ताभिप्रायविषयत्वरूपनिषेध्यार्थाभावहेतोः सत्त्वेन व्यभिचारित्वात्। ननु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रकारकेच्छाविषयत्वमेव विध्यर्थः तदेव चानुमापकमिति न व्यभिचार इत्यत आह, बलवदनिष्टेति, गौरवमितीति तथाच बलवदनिष्टाननुबन्धीष्टसाधनत्वस्य विध्यर्थत्वकल्पनापेक्षया तस्य विध्यर्थत्वकल्पने गौरवमिति भावः। न च प्राचीनमते बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे नैका शक्तिः किन्तु प्रत्येकं विभिन्नशक्तिरवश्यं कल्पनीया इति नानाशक्तिकल्पनापेक्षया तादृशगुरुधर्मावच्छिन्नेऽपि एकशक्तिकल्पने लाघवमिति वाच्यम्। नवीनमतेऽपि ईश्वरेच्छाया विध्यर्थत्वायोगात्

त्वात् निषेधे बाधः, बलवदनिष्टाननुबन्धित्वेनेच्छायाः शक्यत्वे गौरवमिति प्राचीनमतमेव साधीयः ॥ १४ ॥

श्रुतेरित्यस्य व्याख्यान्तरमाह ।

**कृत्स्न एव च वेदोऽयं परमेश्वरगोचरः ।**
**स्वार्थद्वारैव तात्पर्य्यं तस्य स्वर्गादिवद्विधौ ॥ १५ ॥**

सर्वत्र वेदभागे ईश्वरः प्रतिपादितः, यज्ञो वै विष्णुः पशुपतिश्चक्षु-रित्यादिश्रुतिषु एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावा-पृथिव्यौ विधृते तिष्ठत इत्यादिषु च, न तु सिद्धार्थतया आसीपासन्यत्र तात्पर्य्यं, यथा स्वर्ग-नरकादिबोधकानां, तथा ईश्वरमुपासीतेति

---

बलवदनिष्टाननुबन्धिनि इच्छेति बलवदनिष्टाननुबन्धित्वप्रकारकेच्छाविषयत्वसम्बन्धेन बलवदनिष्टाननुबन्धित्वप्रकारकेच्छाविषयत्वे इष्टसाधनत्वप्रकारकेच्छाविषयत्वे कृतिसाध्यत्वप्रकारकेच्छाविषयत्वे च पृथक् शक्तिकल्पनस्यावश्यकत्वात् । प्राचीनमतमिति परपक्षेष्टसाधनत्वादिकं विध्यर्थ इति मतमित्यर्थः । न चेष्टसाधनत्वस्य विध्यर्थत्वे न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणे तृप्तिरूपेष्टसाधनत्वसत्त्वात् तदभावस्य बाधितत्वं स्यादिति वाच्यम् । इष्टसाधनत्वे कृतिसाध्यत्वे बलवदनिष्टाननुबन्धित्वे च विधेः पृथक् शक्तिकल्पनात्, तथाच तृप्तिकामो जलं न ताडयेदित्यत्र इष्टसाधनत्वं, पङ्गुः समुद्रं न तरेदित्यत्र कृतिसाध्यत्वं, न कलञ्जं भक्षयेदित्यत्र बलवदनिष्टाननुबन्धित्वं विध्यर्थः नञा तेषामभावः प्रत्याय्यत इति न काचिदनुपपत्तिरिति भावः । न च इष्टसाधनत्वस्य विध्यर्थत्वे दारुद्वयमथनमग्निसाधनमित्युत्तरवाक्यस्य तरति मृत्युमित्याद्यर्थवादेन विध्यनुमानस्य च वैयर्थ्यमिति वाच्यम् । यतः तादृशोत्तरवाक्यस्य विध्यर्थविवरणतात्पर्यकत्वम्, अर्थवादेन विध्यनुमानस्य अर्थवादस्यानर्थक्यनिरासार्थमेवेति बोध्यम् ॥ १४ ॥

कृत्स्न एव चेत्यादि, अयम् उपवीयमानो वेदः कृत्स्न एव सर्व एव, परमेश्वरगोचरः परमात्मप्रतिपादकः, स्वर्गादिविधिरिति यथा "यन्न दुःखेन सम्भिन्नम्" इत्याद्यर्थवादस्य स्वर्गबोधकस्य स्वार्थप्रतिपादनद्वारा स्वर्गकामो यजेतेत्यादिविधिविषयकतया प्रामाण्यं तथा तस्य "यज्ञो वै विष्णुः" इत्यादिकस्यार्थवादमात्रस्य, स्वार्थद्वारैव स्वार्थप्रति-

विध्येकवाक्यतया तेषां स्वार्थेऽपि प्रामाण्यमेव, अन्यथा स्वर्गादिपदानामपि स्वार्थे प्रामाण्यं न स्यात्, एतदुक्तं स्वार्थद्वारैवेति। स्वार्थप्रतिपादनद्वारा एव विधौ सिद्धार्थतात्पर्य्यात्। वाक्यात् वैदिकप्रशंसा-निन्दावाक्यानि प्रशंसा-निन्दाज्ञानपूर्वकाणि प्रशंसा-निन्दावादवाक्यत्वात् परिणतिसुरसमाम्रफलमित्यादिवत् ॥ १५ ॥

संख्याविशेषादित्यस्य व्याख्यान्तरमाह।

**स्यामभूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा।**
**ससाख्यापि च शाखानां नाद्यप्रवचनादृते ॥ १६ ॥**

वैदिकोत्तमपुरुषेण स्वतन्त्रोच्चारयितुः संख्या वाच्या, तत् ऐक्षत एकोऽहं बहु स्यामित्यादिवाक्येषु उत्तमपुरुषश्रुतेः। संख्यापदार्थमन्य-

---

पादनद्वारैव, विधौ "ईश्वरमुपासीत" इति विधिना सहैकार्थबोधे तात्पर्य्यम् इति समुदितकारिकार्थः। टीकायां सर्वत्र वेदभाग इति, तथाच न सन्त्येव हि ते वेदभागाः यत्र परमेश्वरो न गीयत इति भावः। इत्यादिश्रुतिष्विति, आदिपदात् "तमेव वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादि श्रुतीनां, "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इत्यादिस्मृतीनाञ्च परिग्रहः। ननु क्रियाबोधनार्थं प्रवृत्तस्य वेदस्य यदंशे क्रियानावगम्यते तादृशभागस्य "यज्ञो वै विष्णुः" इत्याद्यर्थवादस्य न स्वार्थे प्रामाण्यम् अपि तु विध्यंश एव तात्पर्यमित्याशङ्कां समाधत्ते न त्विति, सिद्धार्थतया सिद्धार्थबोधकार्थवादतया, अमीषाम् उक्तवेदभागानाम्, अन्यत्र विध्यंश एव। स्वर्गादिपदानामपीति "यन्न दुःखेन सम्भिन्नम्" इत्याद्यर्थवादघटकस्वर्गबोधकपदानामपीत्यर्थः, सिद्धार्थतात्पर्य्यात् सिद्धार्थबोधकार्थवादतात्पर्य्यात्। प्रयोगस्तु सर्वे वेदभागाः पुरुषप्रतिपादकाः वेदत्वात् यन्नैवं तन्नैवं घटादिवदिति। तथाच एतादृशानुमानेन अस्मदादिबाधात् परमेश्वरसिद्धिरिति भावः। वाक्यादित्यस्य व्याख्यान्तरमाह, वाक्यादिति, तथाच स्वर्ग-नरकादिप्रशंसानिन्दाज्ञानञ्च नास्मदादीनां सम्भवतीत्यस्मदादिबाधादीश्वरसिद्धिरिति भावः ॥ १५ ॥

स्यामभूवमिति, स्यामभूवमित्यादिवैदिकोत्तमपुरुषं प्रवक्तृगा स्वतन्त्रोच्चारयितृगता संख्या वाच्येति शेषः। संख्यायते कथ्यते अनया इति व्युत्पत्त्या संख्यापदस्य संज्ञार्थत्व-

माह समाख्येत्यादि। सर्वासां शाखानां हि काठक-कालापिकाद्याः समाख्याः स[illegible]ोपाः [illegible]यन्ते, ते च नाध्ययनमात्रनिबन्धनाः, अध्येतॄणामानन्त्यात् आदावन्यैरपि तदध्ययनात्, तस्मादतीन्द्रियार्थदर्शी भगवानेव कारुणिकः सर्गादावस्मदाद्यदृष्टाकृष्टकाठकादिशरीरविशेषमधिष्ठाय यां शाखामुक्तवान् तस्याः शाखायास्तन्नाम्ना व्यपदेश इति सिद्धमीश्वरमननं मोक्षहेतुः ॥ १६ ॥

यस्येश्वरे न विश्वासस्तं प्रत्याह।

इत्येवं श्रुति-नीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः।

---

माह, समाख्यापि चेति, शाखानां कठ-कालापादिसंज्ञा च, आद्यप्रवचनादृते चादौ सर्गादौ प्रवचनादृते कस्यचित् अतीन्द्रियार्थदर्शिनः उक्तिं विना, 'न' न सम्भवतीत्यर्थः, इति कारिकातात्पर्यम्। टीकायां संख्या वाचेति, तथापि संख्याकारकत्वेन ईश्वरसिद्धिं दर्शयित्वा संख्याश्रयत्वेन ईश्वरसिद्धिर्दर्शितेति भावः। नाध्ययनमात्रनिबन्धनेति येन यादृशी शाखा अधीता तन्नाम्नैव तादृशी शाखा व्यपदेश्या इति न नियम इत्यर्थः, तादृशनियमे दोषमाह, अध्येतॄणामानन्त्यादिति तथाच कठादिसंज्ञानामध्ययनमात्राधीनत्वे चाध्येतॄणामानन्त्येन संज्ञाया अनन्तत्वापत्तिरिति भावः। सर्गादाविति संज्ञापद इति शेषः। प्रयोगस्तु वैदिकोत्तमपुरुषाः स्वतन्त्रोच्चारयितृसंख्यावाचकाः उत्तमपुरुषत्वात् लौकिकोत्तमपुरुषवदिति। तथाच एतदनुमानेन अस्मदादावितरसंख्यावाचकत्वबाधादीश्वरसिद्धिरिति भावः। संज्ञापदस्य संज्ञापरत्वे प्रयोगस्तु वेदशाखानां कठकालापादिसंज्ञा पुरुषीयाधीना संज्ञात्वात् आधुनिकसंज्ञावदिति। तथाच एतदनुमानेन तादृशसंज्ञायां अतीन्द्रियार्थदर्शि[illegible]पुरुषीयाधीनत्वबाधात् अतीन्द्रियार्थदर्शिपरमेश्वरसिद्धिरिति भावः ॥ १६ ॥

[illegible] इत्येवमित्यादि, इत्येवम् इत्यनेन पूर्वोक्तप्रकारेण, श्रुतिः आम्नायः, नीतिः न्यायः, [illegible]योः संप्लवः परस्पराविरोधेन साहित्यं, तदेव जलं, श्रुतीनां न्यायानाञ्च भूयस्त्वात् तत-

किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक त्वयैव कृपया [illegible] नराः ॥१७॥

इतिशब्दः स्वरूपे, एवंशब्दः प्रकारार्थः, शैलसारः लोहमतिः, कठिनशिला वा। प्रस्तुते ईश्वरे विप्रतीपविधयः प्रतिकूलपराः, तादृशा अपि उच्चैरतिशयेन काले भवच्चिन्तकाः, शङ्का-कलङ्कशून्याः कार्य्याः ॥ १७ ॥

अस्माकन्तु निसर्गसुन्दर चिराच्चेतोनिमग्नं त्वयी-
त्यद्धानन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते।
तन्नाथ त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥१८॥

---

शाण्डिल्यादीनामपि मूर्खमाह इति बहुवचननिर्देशः, तैर्जन्तैः आचाखिते ईश्वरविषयक- शङ्कातर्कनिरासेन दृढीकृते हृदये यदं नादधाति निश्चयगोचरो न भवति, ते विप्रति- पन्नाः, शैलसाराशयाः पाषाणहृदयाः लोहहृदया वा। सर्वेषां मुक्तिमभिप्रेत्याह, किन्त्विति, प्रस्तुतविप्रतीपविधयः प्रस्तुते परमेश्वरे विप्रतीपविधयः प्रतिकूलपराः कुतर्का- श्रयपराः, काले तं प्रदमायान् उच्चैः अतिशयेन भवच्चिन्तकाः सन्तः त्वयैव तारणीयाः स्वविषयकनंशयकलङ्करहिताः कार्य्या इति समुदितार्थः ॥ १७ ॥

अस्माकं का वार्त्ता इत्यत आह, अस्माकन्त्विति, हे निसर्गसुन्दर स्वभावसुन्दर अस्माकं चेतः यद्यपि त्वयि निमग्नं श्रवण-मननयोरनन्तरं निदिध्यासनपरम्, इत्यद्धा इति शब्दं, तथापि साक्षात्कारं विना तरलं चेतः अद्यापि न सन्तृप्यते स्वयं दृप्तं न भवति, एवंविधः फलोत्कण्ठानिर्देशः, त्वयि निमग्नमात्रस्य फलं निःश्रेयसं भवत्विति इच्छा न विच्छिद्यते इत्यर्थः। हे नाथ त्वरितं करुणां विधेहि, येन करुणाविधानेन, चेतसि त्वदेकाग्रतां त्वद्विषयक- साक्षात्कारजनकतां याते प्राप्ते सति, याम्या यातनाः नरकयातनाः पुनर्नाप्नुवाम समुदितार्थः ॥ १८ ॥

# যোগশাস্ত্রের—
# বর্ণপরিচয়।

## ( প্রথম ভাগ )

( পুস্তকে বর্ণিত বিষয়ের তালিকা
মলাটের [illegible] পৃষ্ঠায় দ্রষ্টব্য। )

---

সাধক—শ্রীহরিশচন্দ্র প্রণীত
ও
প্রকাশিত।

—:•:—



প্রথম সংস্করণ ১৩২৩ সাল।

---

৺কাশীধাম।

মহামণ্ডল প্রেসে—শ্রীঅম্বিকাচরণ চক্রবর্ত্তী দ্বারা মুদ্রিত।

# বিজ্ঞাপন।

## ( আসল উদ্দেশ্যে গলদ্-তা কাজে কি হবে )

যোগের অলৌকিক ক্ষমতাকে বিশ্বাস করিতে প্রাণ চায় না, এমন লোক হিন্দু মধ্যে খুব কমই আছেন। অথচ যোগ কি জিনিস, যোগের উদ্দেশ্য কি, উপকারিতা কি, কি প্রকারের লোক যোগ শিক্ষায় সাফল্য লাভ করিতে সক্ষম হন এসব বিষয় অনুসন্ধান না করিয়াই অনেকে মনে করেন, হয়ত একটা আপটি এমন কোন মন্ত্র তন্ত্র বা কৌশল আছে, যেটি কপালগুণে সংগ্রহ করিতে পারিলেই যোগীর ক্ষমতা তাহাতে বর্তিয়া যায়; কিন্তু কপালে নাই, তাই মিলিতেছে না, তাই আমার সেই অলৌকিক ক্ষমতা হইতেছে না। যোগ প্রকরণে শরীরকে নীরোগা করে এবং দেহ যন্ত্রাদি পরিপুষ্ট হইলেই মনও উন্নতশীল হয় এবং সঙ্গে সঙ্গে মন পরিপুষ্ট হইয়া, যে বল্ সংগ্রহ করে, তাহার ফলে দেহস্থ ইন্দ্রিয়গণ মনের উপর আর আধিপত্য করিতে পারে না, কাজেই পুরুষ কতকটা রিপুজয়ী হয়। শিশু একটু শক্তি সঞ্চয় করিতে ও মাতৃভাষা বুঝিতে শিখিলেই, আমাদের দেখা উচিত যে, উহার দৈহিক ও তৎসঙ্গে মানসিক উন্নতি কিসে হয়। এইজন্য নবম বৎসর হইতে দ্বাদশ বৎসরের মধ্যে তাহাকে যোগ প্রকরণ শিক্ষা দিয়া যাহাতে সৎ অসৎ বিচারক্ষম হইয়া আজীবন শরীর ও মন সচ্ছন্দে রাখিয়া রিপু পরবশ না হইয়া কোন একটি বৃত্তি অবলম্বন দ্বারা দীর্ঘ-জীবন লাভ করিয়া সুখে জীবন যাপন করিতে পারে. এইরূপে শিক্ষা দেওয়া উচিত মনে করি। এই যোগ প্রকরণ এবং মৃত্যুজ্ঞান লাভ করিবার ক্ষমতা লাভ করিতে শিক্ষা দেওয়া মাতৃভাষার সাহিত্যাদি শিক্ষার সঙ্গেই দেওয়া যাইতে পারে এবং এই যোগক্রিয়ার সামান্য সংস্কার লাভ করিতে বড় জোর ২।৩ বৎসর লাগে। তাহাতে যে ঐ সময়ের মধ্যে অন্য শিক্ষা চলিবে না তাহাও নয়—কিন্তু তাহা না করিয়া আমরা কি করি তাহা দেখা দরকার।

শিশু পঞ্চম বর্ষীয় হইতে না হইতেই তাহাকে মাতৃভাষার বর্ণপরিচয় করাইয়া, মাতৃভাষার সাহিত্যে সামান্য ব্যুৎপত্তি ও রচনাশক্তি জন্মাইবার পূর্বেই তাহাকে অর্থকরী বিদেশীয় ভাষা শিখিতে বাধ্য করি। তাহাতে তাহার বুদ্ধি-বৃত্তির উপর যে, যড় উপস্থিত করি, তাহাতে সে ১৬।১৭ বৎসর বয়সের পূর্বে না মাতৃভাষাতেই নিজ মনভাব ব্যক্ত করিতে শিখে, না অন্যভাষাতেই চিন্তা করিতে শেখে। এইরূপে ৫ হইতে ২৩।২৪ বৎসর বয়স পর্যন্ত, তাহাকে বিদেশী ভাষা শিখাইয়া, শিক্ষিত মানোয়ার বানাইতে চেষ্টা করি। তাই কি ঐ বিদেশী

